

# साहित्य सुधा लहरी









## निबन्ध समुच्चयः

कल्पवल्लीग्रन्थमालायाः प्रथमं कुसुमम् १

# साहित्यसुधालहरी

(निबन्ध समुच्चयः)

रचयिता :

**तट्टा नरसिंहाचार्यः** M. A.

साहित्य, व्याकरण–विद्याप्रवीणः

श्री नारसिंह–संस्कृत–कलाशाला

चिट्टिगूडूरु, कृष्णामण्डलम्

प्रकाशक :

**कल्पवल्ली पब्लिकेशन्स**

गूडूरु, कृष्णा जिला,

पिन् 521149, आन्ध्र प्रदेश

## पितृस्मरणम्

श्रुत्यन्तसिद्धविविधार्थविचारदक्षो
मन्त्रार्थचिन्तनपवित्रितनिर्मलात्मा ।
रामानुजार्यपदपद्मनिविष्टभक्ती
रामानुजो गुरुवरो हृदि मे चकास्तु ॥ ॥ १ ॥

भक्तालिभीतिपरिहारकृतैकदीक्षे
शिष्टालिरक्षणनिविष्टदयाकटाक्षे ।
श्रीरङ्गनाथसुमनोज्ञपदाब्जयुग्मे
भृङ्गायितो मम गुरुर्हृदये चकास्तु ॥ ॥ २ ॥

श्रीरङ्गदेशिकदयार्द्रकटाक्षलब्ध-
मन्त्रप्रभावविदिताखिलविष्णुतत्त्वः ।
तत्त्वावलोकनचणो गुरुरस्मदीयो
देयादहर्निशमनन्तशुभाशिषो नः ॥ ॥ ३ ॥

धन्वन्तरिः पुनरपि प्रबभूव किंवा
किंवाश्विनौ भुवमवातरतां नृरूपौ ।
एवं न कस्य हृदयेऽजनि तर्कणेयं
दृष्टे महामहिमनि श्रुतवद्गुरौ मे ॥ ॥ ४ ॥

ऊर्ध्वपुण्ड्रलसदाननाम्बुजं
गण्डशोभिघनकर्णकुण्डलम् ।
अंसलम्बिबिसतन्तुसुन्दरं
नौम्यहं गुरुमहंकृतेर्हरम् ॥ ॥ ५ ॥

आन्तरं बहिरपि स्थितं तमो
यो निहन्ति निजतेजसानिशम् ।
योह्यनन्तकिरणो दिवाकर-
स्तं गुरुं गुरुसमं नमाम्यहम् ॥ ॥ ६ ॥

## गुरुवन्दनम्

S. K, S S. सुगुणखनिभिर्दत्तहस्तावलम्बा
P. P. S. S. सदयहृदयैः प्रापिता चाभिमुख्यम् ।
S. T. G. V. विमलयशसां प्राभवेणागतार्द्धि
विद्याशाला जगति जयतान्नारसिंहाभिधाना ॥ ॥ १ ॥

नानाककुन्मुखसमागत सद्द्विजालि-
वासो विनिद्रसुमनस्सुमनोभिरामः ।
नित्यं समाश्रितजनाय वितीर्णकामो
जीयादयं हि वरदाभिधकल्पशाखी ॥ ॥ २ ॥

श्रीमन्तं तं वरदमनिशं सद्गुणानां निधानं
शान्तस्वान्तं विदितनिगमैः पण्डितैर्वेद्यभावम् ।
अन्तश्शत्रुप्रहणनपटुं दीनरक्षैकदीक्षं
वन्दे लक्ष्मीपतिमलघुना भक्तिसारेण सन्तम् ॥ ॥ ३ ॥

नृसिंहसूनुं विदुषां वरेण्यं
गीर्वाणभाषाप्रियमार्यपूज्यम् ।
कलाप्रपूर्णं कुलपत्यभिख्यं
वन्दे वदान्यं वरदं गुणाढ्यम् ॥ ॥ ४ ॥

आ शैशवादपि च यस्सुतनिर्विशेषं
मां वीक्ष्य सद्गुरुपदं स्थिरमाततान ।
सोऽयं गुरुर्गुरुवधीरणधीरधीको
न स्यात्स्मृतेरनुपदं नु पदं कथं मे ॥ ५ ॥

वादशस्त्रे तर्कशास्त्रे द्वितीय इव गौतमे ।
वाङ्मूर्धशेखरे सोमशेखरे मे नमस्कृतिः ॥ ॥ ६ ॥

—o—

# कृतिसमर्पणम्

यो मे गुरुः परो बन्धुः प्रियं मित्रं हितः पिता ।
तस्य श्रीश्रीनिवासस्य चरणौ शरणं मम ॥



सकललोकैककारणस्य समस्तकल्याणगुणभाजनस्य सर्वार्तिशमनस्य सर्वशक्तिसम्पन्नस्य करुणावरुणालयस्य कांक्षितार्थप्रदानदीक्षितस्य चतुराननादिवन्दितचरणकमलस्य रमणीयवक्षःस्थलस्थित श्रीरमणीद्वयशोभितस्य, रेखारूप सुधा कलश शंखचक्रवज्राङ्कुश सरोरुहादि परतत्त्वचिह्न परिगत पदयुगलस्य, मृगराजगजराज हयराज विहगराजादिसेवितस्य, करिराजवरदस्यगरुडाचलादि सप्ताचलशेखरस्य हलायुधबलरामानुजस्य पद्मावतीमनोरमणस्य श्रीमद्वेङ्कटरमणस्य चरणकमलसन्निधौ

साहित्यसुधालहरीयं समर्प्यते सप्रश्रयं साञ्जलिबन्धं सरोमहर्षं

तट्टा नरसिंहाचार्येण

INDISCH-OSTASIATISCHES SEMINAR
der
Philipps–Universitat
Professor Dr. Wilhelm Rau
Director

January 14th, 1979
355 MARBURG,
Am Krummbogen 28/F
Telefon 28 47 41

Sri T. Narasimhacharyulu, M. A.
"S. V. Vidyapraveena"
Lecturer : S.N.S. College
Chitti Guduru, Krishna Dt.
Andhra Pradesh INDIA.

Dear Colleague,

About two months ago, in November 1978, I received with great joy your letter together with two copies of your Sahityasudhalahari and I wish to beg your pardon for not having thanked you earlier. Unfortunately, my duties are multifarious, leaving me little time for the reading of belles lettres. During the Christmas vacations I fortunately found the opportunity to peruse this collection of your essays and I relished it extremely both for the lucid and sweet Sanskrit diction (so rich in anuprasas) as well as for the contents. Especially valuable are for us here in Germany your biographical sketches on Varadacharya and Venkata Ramana Sastri for information on these scholars and their works is availa-

ble to us from no other source. It is, in my opinion, highly desirable that Sanskritists all over the world get in closer touch, i. e. learn more on about the other, than has been the case until now.

Next, I particularly enjoyed your essay on Magha, for it was on a Kashmirian manuscript of his Sisupalavadha that I wrote my doctoral thesis thirty years ago. I felt like meeting an old friend.

So please accept once again my heart-felt thanks for this most valuable publication.

Wishing you health and prosperity and all possible success in your future work I remain-

Yours very gratefully

Sd/Wilhelm Rau

OFFICE :
Dr. SARVESWARA SHARMA PERI,
M. A., Ph.D., Lektor
Indisch-ostasiatisches Seminar
Der philipps.Universitat
Krummbogen 28/F. I
3550 Marburg (LAHN)

Federal Republic of Germany

I have read with great interest the Sahitya-sudhalahari. The style adopted by the author reminds me that of Bana and Dandin. Twelve different essays have been included in this book. Three of them noteworthy because they relate to our modern times. They are: 1. Introducing Sri S. T. G. Varadacharyulu who has done a great service for fostering and popularising Sanskrit studies in the Andhra Pradesh; 2. Introducing Sri Duvvvri Venkata Ramana Sastri, who is a great Telugu scholar; and 3. The advent of Kamakotipithaswamy of Kanchi.

This work shows that even today there are some Sanskrit scholars who can write Saskrit prose well on par with poets like Bana and Dandin.

I wish the author every success in the field o! production of such literature in future.

Sd/-P. Sarveswara Sharma
12-1-1979

श्री कप्पगंतुल लक्ष्मणशास्त्री
भूतपूर्व आन्ध्रप्रदेश उपनिदेशकः

हैदराबाद
आदर्शनगर-63

## मोमुद्यते मनो मेऽद्य

विद्वन्मित्रमहोदयैर्विरचितं साहित्यसुधालहरीनामकं पुस्तकं मया आमूलाग्रं सश्रद्धं च पठितम् । अस्मिन् पुस्तके सङ्कलिता बहवो निबन्धाः, संस्कृत विद्यार्थिनामेव न केवलं, परंतु विदुषा-मपि जिज्ञासनीयास्सन्तीति वक्तुं मोमुद्यते मे मनः । अत्र विशिष्य पण्डितराज-जगन्नाथः गीर्वाणवाणीवैभवं इत्यादीन् विषयानधिकृत्य लिखिता लेखा नितरां जिज्ञासितव्या इति मन्ये । संकृत्त-निबन्ध रचना-चातुरी महितानां, अस्मद्विद्वन्मित्र-वरेण्यानां श्रीमतां नरसिंहाचार्यमहोदयानां, ये हि बहोः कालान्महाविद्यालयेषु संस्कृत-साहित्य-शास्त्राध्यापने संलग्नाः, लेखिनीद्वारा प्रसृतेयं साहित्य-सुधालहरी सुमधुरा मृदुला च विराजते । सेयं सहृदयानां हृदयानि गङ्गाझरीव पवित्रीकृत्य संस्कृतच्छात्राणां कते समुपयोगिनी भूया-दित्याशासे ।

तट्टोपाह्वनृसिंहार्यरचितो गद्यसङ्ग्रहः ।
विद्वच्छात्रसमाजाय भूयात्समुपकारकः ।।

क. लक्ष्मणशास्त्री

# नम्रनिवेदनम्

गुरूणां नियोगेन, शिष्याणां प्रचोदनया च साहित्यसुधालहरीयं प्रकाश्यते सानन्दम् । तेषु तेषु सन्दर्भेषु सङ्कलितानामियं निबन्धानां समुच्चयः । अगुम्फितानां कुसुमानामिव असङ्कलितानां निबन्धानां नास्ति चेतोहारित्वं सचेतसाम् । पुष्पहार इव निबन्धसमुच्चयः कल्पेत विदुषां कण्ठाभरणतामाधातुम् । तदुक्तम्—

"असङ्कलितरूपाणां काव्यानां नास्ति चारुता ।
न प्रत्येकं प्रकाशन्ते तैजसाः परमाणवः" ।। इति ।।

सकलकलानिलयस्य, आन्ध्रविश्वविद्यालयस्य निदेशात् कविराजस्य पण्डितराजस्य जगन्नाथस्य प्रतिभावैभवं प्रतिष्ठामगात् । पारितोषिकप्रदानेन मां सन्तोषितवतः, आन्ध्रप्रदेशस्य करुणा 'सङ्गीतमथ साहित्य' मित्यस्य जन्मने कारणतामयासीत् । आकाशवाणी "चादिकविरादिकाव्यञ्चे" त्यस्य समुत्पत्तौ हेतुरभूत् । संस्कृतभाषा प्रचारिणी सभा प्रासूत "कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि" इत्यमुं सन्निबन्धनं निबन्धम् । "कुलपति" "शशास्त्रि महोदय" इत्येतावुभावपि निबन्धौ तयोः कलाप्रपूर्णबिरुदप्रदानसंदर्भे संदृब्धौ मया । "यतिपतेरागमनं" यतिपतेरागमनं अस्मत् कळाशालां प्रति यदाभवत्तदा गुरोरनुज्ञया सभक्तिश्रद्धं मया पठितम् । हृद्यगद्यनिर्माणकामुकानां विद्यार्थिनां कृते "गद्यं कवीनां निकषं वदन्ति" इति-निबन्धो निर्मितः । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः" "माघे मेघे गतं वयः" "माघे सन्ति त्रयो गुणाः" "मुरारिपदचिन्ता चेत्तदा माघे मतिं कुरु" इत्यादीना-

माभाणकानां श्रवणेन समुपजातकुतूहलोऽहं–सहृदयहृदयाह्लादाय महाकविं माघं प्रति कतिचन पङ्क्तीर्व्यरचयम् । तिरुपति वेद-परिषदश्शासनानुसारेण "तासां त्वं प्रभवो गिराम्" इति नाम्ना वेदानां स्वरूपं न्यरूपयं सङ्ग्रहेण ।" वदान्यशिरोमणेः गोरंट्ल-वेंकन्न महोदयस्य शतवार्षिकोत्सवसन्दर्भो मामुत्सुकमकरोत् "वाणीं भजत गैर्वाणी" मित्यस्य निर्माणे । अस्मत्कलाशालायाः कालिदासजयन्ती, "कविकुलगुरुः कालिदास" इति निश्शङ्कं वक्तुं मह्यमदान्महतीं शक्तिम् ।

इयं साहित्यसुधालहरी सुरभारतीसेवा समासक्तमनसां सुमनसां मनोविनोदाय कल्पेतेति धिया व्यरचि मया । यदीय-मेकस्यापि सुमनसस्सम्मोदमादधीत, विदधीत मे चेतसोऽसीमान-मानन्दम् । संस्कृतसाहित्यचरितमधिजिगमिषूणां संस्कृतभाषा-प्रणयिनां विद्यार्थिनां, कृते कृतः परिश्रमोऽयमनल्प फलं जनये-दिति दृढो मे विश्वासः । अधुनातनीं हृद्यां गद्यसरणिं मनसिकृत्य प्रबन्धस्यास्य रचना मया कर्तुमुपक्रान्ता । "यद्ययमुपक्रमः फले-ग्रहि" रिति सहृदयसमाजो मामनुमन्येत, मन्ये चाहमात्मानं धन्यम् ।

मनस्वी मनीषी मनोज्ञो मधुरो मान्यश्च शर्मण्यदेशीयः, विल्हेल्म्री महोदयः, प्रथमतो मम हार्दिकीं कृतज्ञतामर्हति, यतस्स सत्स्वपि महत्सु कार्येषु, सुदूरे तस्थिवानपि मंजुलं मनोहरं महार्घं स्वाभिप्रायमाविष्कृतवान् । गुरुतुल्यः प्रियमित्रं सहृदयश्च श्री पेरि सर्वेश्वर शर्मा मम मान्यो अभिनन्दनीयश्चास्मिन् सन्दर्भे । श्री वेङ्कटेश्वरविश्वविद्यालय संस्कृत प्रधानाचार्येभ्यः विदितनिखिलधर्मेभ्यः प्रकटीकृतशास्त्रमर्मभ्यः श्रीकृष्णशर्मभ्यः, उस्मानिया विश्वविद्यालयसंस्कृत प्रधानाचार्येभ्यः, अन्तर्बहीरम्ये-

भ्यो रमणीयगुणालयेभ्यः, दर्शित–विद्वदनुरक्तिभ्यः श्री B. R. शास्त्रि महोदयेभ्यः आन्ध्र विश्वविद्यालय संस्कृत प्रधानाचार्येभ्यः निजगुणावर्जित सुधीतल्लजेभ्यः विनयातिशयमूर्तिभ्यः, श्री पि. श्रीराममूर्ति महाभागेभ्यश्च विनिवेदयामि हार्दिकीं कृतज्ञताम् । प्रियमित्राणां गुरूणां च भगवान् इन्नमराय शर्मणां, पण्डिताग्रणीनां कप्पगंतुल लक्ष्मणशास्त्रिणां, गीर्वाणवाणी–प्रणयिनां कालूरि हनुमंतरावुमहोदयानां च विद्वद्वरेण्यानां V. वरदाचार्याणां च कृते विनिवेद्यते हार्दिकी कृतज्ञता । ग्रन्थस्यास्य हृद्यां भूमिकां, विरचितवद्भ्यः सौजन्यशालिभ्यः विद्वत्तल्लजेभ्यः Dr. पुल्लेल श्रीरामचन्द्रमहोदयेभ्यः मदीयां हार्दिकीं कृतज्ञतामाविष्करोमि ।

ग्रन्थस्यास्य विरचनसमये मुद्रणसमये च महत्साहायकमारचितवतां, प्रतिभावतां–व्युत्पत्तिमतां सहृदयानां प्रियशिष्याणां–वेङ्कटशेषाचार्य-रघुनाथभट्टाचार्य-कुटुम्बशास्त्रिणां कृते, श्रियःपतिः वेङ्कटाचलाधीश स्समस्तसन्मङ्गलानि वितरत्वित्याशासे । अचिरादेव रुचिरं मुद्रापयित्वा ग्रन्थस्यास्य मुद्रणे प्रधानं पात्रं वहद्भ्यो दक्षिणभारत मुद्रणालयाधिपतिभ्यः विशिष्य विनयमूर्तिभ्यः मितभाषिभ्यः हितैषिभ्यश्च A. रामस्वामी महोदयेभ्यो नतिततिपुरस्सरं समर्पयामि धन्यवादान् ।

"गच्छतः स्खलन" मितिन्यायेन-अनवधानकृताः अव्युत्पत्तिकृताः अशक्तिकृताः मुद्रणकृताश्च दोषा बहवस्सम्भवेयुः, तान् क्षमध्वमित्यभ्यर्थये गुणग्रहणपारीणान् रसज्ञान् विशेषविदुषो विदुषः । प्रयते चागामिनि मुद्रणे तानपनोदितुम् । कृतिमिमां सुकृतिनामग्रगण्यस्य सर्वज्ञस्य सकलसद्गुण सिन्धोः रमासखस्य श्रीनिवासस्य विहित भुवनानन्दयोश्चरणारविन्दयोश्चरर्पयता मया साधु कृतमित्यभिनन्दामि निरपत्रपमात्मानम् ।

हैदराबाद
5–5–1979

इत्थं निवेदयिता
विदुषामाश्रवः
तट्टा नरसिंहाचार्यः

श्री :

# भूमिका

काव्यनटकादीनां गुणदोषविमर्शात्मिकया, शास्त्रीयविषयनिरूपणप्रवणया वा रीत्या रचयन्तो लघून् निबन्धान्, निबन्धान् रचयितुं नैव प्रायः उद्युञ्जते संस्कृतपण्डिताः । द्वात्रिंशदक्षरमितानि, किञ्चित्ततोऽधिकसंख्याकाक्षराणि वा कतिचित् पद्यानि विरच्य, तैरेव श्रोतॄन् रञ्जयित्वा तावतैवात्मन आहोपुरुषिकामाविर्शिचकीर्षन्ति, उपविंशपत्रमितस्य, पाण्डितीनिकषोपलस्य निबन्धस्य निर्माणात् यावान् संमानः सम्पाद्यते तावतः ततोऽप्यधिकस्य वा द्वित्रिश्लोकरचनयैव लाभे को नु वा महतः परिश्रमस्य भाजनमात्मानं कर्तुमुत्सहेत ? अथापि वर्तन्त एवैतस्या रीतेरपवादभूताः केचिद्विद्वत्तल्लजाः अङ्गुलीमात्रपरिगणनीयाः तत्र तत्रेति महदिदं भागधेयं सुरभारत्याः; येषु चान्यतमा इमे परस्परविरोधिन्योः पाण्डितीविनीत्योः समागमस्थानभूताः श्रीमन्तः नरसिंहाचार्याः ।

द्वादश विषयानधिकृत्य रचितानां निबन्धानां संकलनरूपोऽयं ग्रन्थः रचयितुः शास्त्रवैदुषीं, विवेचनाशक्तिं, सहजां सहृदयतां चाभिव्यनक्ति । प्रथमे निबन्धे पण्डितराजस्य जगन्नाथस्य सरसकवितानिर्माणचातुरी पाण्डित्यप्रकर्षश्च सुनिपुणं निरूपितौ । "विद्वानेव विजानाति विद्वज्जनपरिश्रमम्" इति

न्यायेन पण्डितराजस्य पण्डितराजतां निर्णेतुं आचार्या एव शक्ता इति नात्र सन्देहः। "सङ्गीतमथ साहित्यम्" इति निबन्धः संस्कृतवाङ्मये शब्दचित्रकाव्यस्वरूपजिज्ञासूनामतीवोपकुरुते।

"वाणीं भजत गैर्वाणीम्" इति निबन्धस्य संस्कृतभाषावैशिष्ट्यनिरूपणात्मकस्यान्ते आचार्याणामुक्तिः—"संस्कृतभाषासंरक्षणं नाम भारतीयसर्वभाषासंरक्षणम्, यदि वयं जलेन सिञ्चेम वृक्षस्य मूलं तदा तदङ्गानां पत्रपुष्पफलादीनामपि संरक्षणमवश्यं भविष्यति" इत्याद्या यदि केषाञ्चिदपि वा प्रजातन्त्रनिर्वहणपराणां श्रुतिपथं व्रजेत् तदा शुभं भवेत् भारतस्य।

"तासां त्वं प्रभवो गिराम्" इति निबन्धः वैदिकस्य स्वरूपं वाङ्मयस्य संक्षेपेणोपवर्णयति। "कुलपतेः परिचयः" इति निबन्धः श्रीमतां संस्कृतभाषाप्रचारणचणानां वरदाचार्याणां विषये रचयितुः गुर्वीं गुरुभक्तिं विशदयति। पण्डिताः प्रायः परगुणकथामूकभावं अवलम्बन्ते इति लोकवादः मिथ्याकृत आचार्यैः "श्री शास्त्रिमहोदयः "इति निबन्धं श्री दुव्वूरि वेङ्कटरमणशास्त्रिगुणप्रशंसापरं सङ्ग्रथ्नद्भिः।

प्रायः द्वैताद्वैतविशिष्टाद्वैतादिवैदिकसम्प्रदायानुसारिष्वपि, एकैकोऽपि स्वर्गद्वारकवाटोद्घाटनकुञ्चिका आत्मन एव कक्षे वर्तत इति अथवा मोक्षसाम्राज्यपदवी आत्मानमेव प्रतीक्षते इति मन्वानः सम्प्रदायान्तरानुसारिणः सर्वान् ज्ञानकिंपचानान् निरयोन्मुखांश्चोत्पश्यन् तानधिक्षिपति; मान्यानप्यन्यानवमनुते, ईदृश्येव च प्रवृत्तिः दृश्यते प्रायः हिन्दू-मुस्लिम-क्रैस्तवादिमतानुयायिषु, अद्य कस्मिंश्चिन्मते सम्प्रदाये वा बद्धश्रद्धाः एते यदि

दैववशात् मतान्तर-सम्प्रदायान्तरानुयायिनां कुले जनिमलप्स्यन्त तदा अद्य आत्मीयतया आत्मनीनतया चोद्घुष्यमाणं मतं सम्प्रदायं वा तथैवादूषयिष्यन् यथा तेऽधुना दूषयन्ति मतान्तरम् । अतीवेदं प्रमोदस्थानं यदेते श्रीमद्रामानुजीयसम्प्रदायानुसरणप्रवणाः नरसिंहाचार्याः श्रीकाञ्चीकामकोटिपीठाधीशानां अद्वैताचार्याणां स्तुतिरूपं कंचिन्निबन्धमपि ग्रन्थेऽस्मिन् न्यबध्नन्निति, नूनं प्रशंसार्हेयमेषां सकलसम्प्रदायवैशिष्ट्यावगाहिनी धिषणा । यद्येतादृशी प्रवृत्तिः सर्वैः तत्तन्मतसम्प्रदायानुसारिभिरनुह्रियते—द्वैतिभिरद्वैतिभिः, हिन्दुभिः, मुसलमानैः, क्रैस्तवाद्यैश्च—हन्त साधितप्रायमेव लोके भवेत् सर्वजनसौमनस्यम् ।

"आदिकविरादिकाव्यञ्च", "कविकुलगुरुः कालिदासः", "महाकवि माघः" इति निबन्धत्रये तत्तत्कवितल्लजानां कवितासौन्दर्यम् उच्चित्योच्चित्य पाठकानां मनोनयनस्याग्रे निवेशयन्तः श्री आचार्याः "गद्यं कवीनां निकषं वदन्ति" इति निबन्धे गद्यकवीनां बाणदण्ड्यादीनां काव्यरत्नपरीक्षायामात्मानं निकषोपलयन्ति ।

एवं विविधान् साहित्यसम्बद्धान् विषयान् "कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि" इत्यादि लोकोपयुक्तविषयांश्चाधिकृत्य रुचिरान्निबन्धान् निर्मितवद्भिः श्रीनरसिंहाचार्यैः सर्वोऽप्ययं संस्कृतज्ञलोकः सर्वथाधमर्णीकृतः ।

1-5-1979<br>भाग्यनगरम्

इत्थम्<br>पुल्लेल श्रीरामचन्द्रः<br>रीडर्, उस्मानिया विश्वविद्यालयः

## निबन्धानुक्रमः

Dr. V. Varadachari, M.A., Ph.D.
Retd. Reader in Sanskrit
S. V. University
Tirupati.

These essays are written in Sanskrit by Pandit T. Narasimha charyulu. They represent an attempt at using Sanskrit as a vehicle for treating various topics on Sanskrit literature. By a careful and diligent use of simple Sanskrit prose, the author of these essays has achieved distinction as one who is gifted with critical acumen. His writings make it abundantly clear that Sanskrit could be made effective use like English for recording one's critical exposition of literary matters.

Among the twelve essays contained here, those on Jagannatha Pandita which is the first and on Magha coming at the end are the longest. The greatness of the former both as a poet and critic is brought out vividly. His place in the court of the king and his equipment receive special treatment and go a long way to justify his eminence. Magha's greatness is well brought out with a strikingly corresponding study of Bharavi's talents with illustrations from the works of the two writers.

The next two relatively long pieces on Musie and Literature and prose writing respectively. The fromer is charming for the treatment of poetry in the light of poetics with illustrations from Bharavi and Magha studied in the light of the principles of poetics. The latter topic has a fine treatment with special reference to the works of Bana and Subandhu.

Among the other essays which cover limited number of pages, the study of Sanskrit is valuable and proofs are given that this language is not dead, that it has profoundly influenced all the regional languages and their literatures and that there is a very wide and vast literature written in this language. That God is the source for all the four Vedas forms the subject of another essay. The address of welcome presented to Sri Kanchi Sankaracharya on his visit to the Sanskrit College at Chittiguduru is included in this collection. Kalidasa's date is discussed in easy 'flowing Sanskrit as it is done in English writings with all the argument for and against fixing it in the pre-christian era. Valmiki's eminence as the first poet is well treated in a separate essay.

The author pays glowing tributes to Prof. S. T. G. Varadacharyulu, the Principal of the Sanskrit College at Chittiguduru and these tributes are meaningful to bring out the well-merited enthusiasm of the Professor for Sanskrit and the promotion of Sanskrit learning.

Likewise, Duvvuri Venkataramana Sastri is deseribed as a scholar both in Sanskrit and Telugu and as the author of nearly forty works in these two languages. Specific mention is made to his rendering into Telugu of the Nyayabhasya.

A topic of general interest but of utmost importance is thas we should learn to know what we should do and what we should not. The results of undertakings in the light of this understanding are treated in a separate essay.

Besides providing a fund of information on the topics treated, this collection should be helpful for the students of Sanskrit in colleges in preparing answers for the textual topics and on general topics as well.

My pious wish is that the learned author could bring forth similar essays on kindred and also other topics.

TIRUPATI
27-1-1979

V. VARADACHARI

Dr.M.B.V.I.R. Sarma,
M.A.,Ph.D.
Lecturer in Hindi (Retd.)
KHAMMAM-507003.

8-21-91
Jubileepura,
Khammam-507003

## OPINION

I am proud to acknowledge my association with Sriman "Ramaneeya Vanee Lalasa" Tatta Narasimhacharya, M. A, 'Sahitya Vidya Praveena' 'Vyakarana Vidya Praveena' for the last four decates. He is a great Schlar in Sanskrit, besides his deep knowledge in Telugu, Hindi and English.

Ever since his boyhood, he has been composing poems in Sanskrit in a grand style, pregnant with embellishments, Grammatical peculiarities and suggestivity. He pessesses an immense imaginative vision. He combines in his writings Arthalankaras and Sabdalankaras with such a subtle dexterity as to render his readers spellbound. He is a treasure of lucid style and gorgeous vocabulary.

During his collegiate-life, he has been a voracious reader and shrewd critic. He is a prolific writer both in prose and poetry. His compounds make the reader remind the 'Sudeergha Samasas' of Bana Bhatta and Dandin. Where he wants to lay a stress on a particular situation, he uses very simple, short and sweet sentences.

Sriman Acharya takes the theme for his essays both from the ancient lore as well as the modern society and its needs. Most of his writings are classical in thought and didactic in content. He uses rhyme lavishly both in prose and poetry alike. Aptness and familiarity are the redeeming features of his similies. There is charm and pristine glory in his style.

The present collection of essays is a result of his vast knowledge, intensive study deep thought and skillful art.

I am of the firm opinion that this author's worth will widely be appreciated by learned pundits, Scholars and patrons ofo ur Gairvannee, the cultural heritage of India.

May Lord Srinivasa shower His choicest blessings on Sriman Narasimhacharya and bestow on him long life and prosperity to enable him to produce many such publications as this to inculcate the spirit of learning Sanskrit in his fellowmen.

Sd/ M. B. V. I. R. SARMA,
22-11-78

Dr. E. R. SRIKRISHNA SARMA.
Professor & Head.
Department of Sanskrit.
Sri Venkateswara University, Tirupati.

सहृदयैः पण्डितैश्च नरसिंहाचार्यमहोदयैः निबद्धोऽयं साहित्यसुधालहरीनामको ग्रन्थः विविधविषयस्पृगपि सरलया शैलीधोरण्या अर्थानां सूक्ष्मेक्षिकया च संस्कृतभाषाकाव्यपठनरूपे एकत्र विषये दत्तादरः एकवाक्यतां भजन् संस्कृतप्रेमिणां सहृदयानां हृदयमावर्जयति । पाणिनिना शास्त्रीयैः नियमैः शिष्टव्यवहारस्य सौभाग्यं प्रापिता प्रयोक्तृभिश्च कविभिः सादरं लालिता सुरभारती चिरन्तनानामिव नवीनानामप्याशयानां प्रकाशने अद्यापि प्रगल्भेति अयं निबन्धसमुच्चयः निदर्शयतितराम् । विशिष्य च पण्डितराजस्य काव्यानि माघस्य शिशुपालवधं चाधिकृत्य कृतौ प्रबन्धौ संस्कृतविद्यार्थिनामिव सहृदयानामन्येषामनुवाचकानामपि अतिमहते उपकाराय कल्पेते । आन्ध्रदेशे आधुनिककाले संस्कृताध्ययनाध्यापनयोः कुलपतिपदे सर्वैर्निर्विवादमभिषिक्तानां वरदाचार्यमहोदयानां, अभियुक्तानां काव्यव्याकरणविनोदिनां वेङ्कटरमणशास्त्रिमहोदयानां च गुणविशेषान् संस्पृशन्तौ द्वौ लेखौ अस्य निबन्धसमुच्चयस्य कमप्यर्थविशेषं पुष्यतः । एवमेवान्येऽपि प्रबन्धाः पाठकानां महत्यै रुचये सम्पद्यन्त इति अस्य ग्रन्थकृतः सदुद्यमोऽयं संस्कृतप्रणयिभिः अभिनन्दनीयः । आशासे च भूयोऽपि एतादृशग्रन्थनिर्माणेन संस्कृतभाषायाः पोषणं सहृदयानां च तोषणं निर्वहन्नयं ग्रन्थकारः चिरं संस्कृतज्ञान् कृतज्ञताऽऽवर्जितान् कुर्यादिति ।

तिरुपति,
१-३-१९७९

श्रीकृष्णशर्मा

डा. पी. श्रीराममूर्तिः एम्. ए., पी. एच. डी.
प्रोफेसर, आन्ध्र यूनिवरसिटी
संस्कृत विभागः–वाल्टेर

महोदयाः,

भवत्प्रेषिता साहित्यसुधालहरी समासादिता । तत्रत्या निबन्धाः सर्वेऽपि भवतां पाण्डित्यं स्फुटयन्ति । प्रथमो निबन्धः पण्डितराजप्रतिभावैभवं शास्त्रवैदुष्यं च साकल्येन निरूपयति । एवमेव कालिदासादिमहाकवीनां तत्काव्यानाँ चानुशीलनं सहृदय-हृदयङ्गमं पण्डितसम्ममंच भासते । आधुनिकाश्च विषयाः अस्मिन् ग्रन्थे वर्णिताः । कुलपतीनां शास्त्रिणां च सुमहद्यशः भवन्मुखात् मुखरीकृतम् परमामोदाय कल्पते । ग्रन्थोऽयं कविपण्डितसंमान्यः भवत्विति आशासे ।

वाल्तेरु
22-12-1978

श्रीराममूर्तिः

Kaluri Hanumantha Rao B. Sc. M. PHARM.
OUB 58 OSMANIA UNIVERSITY CAMPUS.
TARNAK-HYDERABAD-7

## दृढो मम प्रत्ययः

अस्मिन् ग्रन्थे "पण्डितराजस्य प्रतिभावैभवम्" इत्याद्यः द्वादश निबन्धाः सम्पुटीकृताः। श्रीमद्भिः तट्टा नरसिंहाचार्यैः बहव साहित्यसामाजिकविषयाः चर्चिताः प्रतिपादिताः आलोडिता निरूपिताश्चैतेषु निबन्धेषु । ग्रन्थोऽयं संस्कृतसाहित्यरसिकानां सहृदयानां प्रीतिपात्रं भविष्यतीति दृढो मम प्रत्ययः ।

३-१-१९७९ (Sd) कालूरि हनुमन्तरावः

श्रीहयग्रीवाय नमः

# *पण्डितराजस्य प्रतिभावैभवम्

## I कवितावैभवम्

### प्रार्थना

1 जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति तेषां यशःकाये जरामरणजं भयम् ॥

(भर्तृहरेः)

2 विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥

(कुवलयानन्दे)

3 इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

(मल्लिनाथस्य)

4 वन्दारुभक्तजनमन्दारमिन्दुहिमकन्दाभकीर्तिमतुला-
नन्दाभिराममुनिबृन्दाभिगीतमरविन्दासनाभिविनुतम् ।
बृन्दारकाभिनुतबृन्दावनीचरममन्दानुरागभरितं
नन्दात्मजातमरविन्दायताक्षमभिनन्दामि साम्प्रतमहम् ॥

(ममैव)

---

* आन्ध्रविश्वविद्यालयसंस्कृतविभागेन समायोजिते जगन्नाथसमारोहे ( Jagannatha Seminar ) निबन्धोऽयं पठितः ।

६ किङ्गाढरागपरिषङ्गादनारतमनङ्गाकुलोऽभिरमसे
शृङ्गारवीथिनवभृङ्गायितो, रतितरङ्गान्तरापतसि किम् ?
गङ्गामवाप्य, भृशमङ्गान्युदस्य, हृदि रङ्गान्तराहिततमं
त्वङ्गाय, भूरिभयभङ्गाय, तोषिततुरङ्गाननाङ्घ्रिकमलम् ।।
(मञ्जुनाथस्य)

## सभाजनसभाजनम्

गाढतरशब्दार्थव्युत्पत्तिमसृणीकृतान्तःकरणाः, स्वान्तःकरणविनिवेशितभगवच्चरणाः, करुणावरुणालयगुरुचरणशरणाः, श्रीगुरुचरणाः ! अल्पेतरकल्पनासन्तोषितमहीशाः कवीशाः ! सदयहृदयास्सहृदयाः ! सकलसद्गुणमण्डिताः पण्डिताः ! सावधानमवधारयन्तु मदीयां विज्ञप्तिम् । रचयास्यञ्जलिं सप्रश्रयं सरोमहर्षं सश्रद्धं च। महदिदं नः प्रमोदस्थानं यत् सकलानां कलानां हृद्यानां विद्यानां च निलयोऽयमान्ध्रविश्वविद्यालयः कविराजस्य पण्डितराजस्य च जगन्नाथस्य महता वैभवेन महोत्सवमारचयतीति ।

## चरित्रसङ्ग्रहः

विदितचरमेव ह्येतत्सर्वेषामपि विदुषां यत् आलङ्कारिकचूडामणिः प्रतिभावतामग्रणीः जगन्नाथः क्रिस्त्वब्दीयसप्तदशशतके, समीचीनेन शास्त्रपाण्डित्येन महितया स्वकवितया च सहृदयहृदयान्यरञ्जयदिति । न न हि विदितं भवतां यत् विहितागण्यपुण्ययोः गुणगणवरेण्ययो, दम्पत्योर्लक्ष्मीपेरुभट्टयोः गर्भशुक्तिमुक्ताफलमयं, महोज्ज्वलया स्वकान्त्या, दिगन्तरालं प्रकाशयामासेति । दिगन्तविश्रान्तकीर्तिस्तत्रभवान् पेरुभट्टश्च श्रीमतो, ज्ञानेन्द्रभिक्षोः ब्रह्मविद्यां, महेन्द्रपण्डितात् न्यायवैशेषिकदर्शने, खण्डदेवात्पूर्वमीमांसां, शेषोपाह्ववीरेश्वरपण्डिताच्च महाभाष्यमधीतवान् । तत्तनयो जगन्नाथः, एवं सर्वविद्याधरात्

महागुरोः निजपितुर्निखिलानि शास्त्राणि सभक्तिश्रद्धमधीत्य बाल्य एव, महोद्दण्डपण्डितस्समजनि। तस्याप्रतिमा प्रतिभाझरी कूलङ्कषा प्रवहन्ती, समपादयदभ्रङ्कषां कीर्तिम्। कविता पाण्डित्यं चेति द्वावपि प्रतिभाविभागौ व्यजृम्भेतामस्यान्योन्यम्। "निराश्रया न शोभन्ते पण्डिता वनिता लताः" इति न्यायानुसारेण पण्डितस्यास्य विजिता मरावतीवैभवं जयपुरमादौ महानाश्रयो बभूव। तदनु जयपुरात् यवन-प्रभोश्शक्रोपमवैभवस्य शहाजहानस्य सभां प्राप्य भारतराजधान्यां दिल्लीनगर्यां सुचिरं सुखमुवास। तत्र निजविद्याचमत्कारतोषितात् सार्वभौमात् शहाजहानात् पण्डितराजपदवीं कविराजपदवीं च लब्ध-वानयं लब्धवर्णः। शहाजहानपुत्रस्य दाराशिकोहस्य समीपे कञ्चि-त्कालं, कामरूपदेशाधिपतेः, सहृदयचूडामणेः प्राणनारायणमहीभृतो निकट कञ्चित्कालं च सुसुखं न्यवात्सीदयं सुधीतल्लजः। विश्वनाथस्य विहारभूमिं वाराणसीं वा श्रीकृष्णस्य विहारभूमिं मधुरां वा प्राप्य जीवितावसाने हरिहरयोर्नामस्मरणं कुर्वन् क्षणमिव दिवसाननयत्।

## राजचित्तानुवृत्तिः।

महाराजचित्तानुवृत्तिचातुर्यं पण्डितराजस्य बुद्धिचातुर्यस्य परम-मुदाहरणम्। अयं यं यं समाश्रयत् तं तं नितान्तं वर्णयन्, तस्य तस्य निरुपाधिककृपाप्रपापात्रमभवत्। पश्यत, दिल्लीवल्लभस्य शहाजहानस्य वर्णनं कीदृशं हर्षप्रकर्षं जनयति स्म।

दीनव्राते दयार्द्रा, निखिलरिपुकुले निर्दया, किंच मृद्वी
काव्यालापेषु, तर्कप्रतिवचनविधौ कर्कशत्वं दधाना।
लुब्धा धर्मेष्वलुब्धा वसुनि, परविपद्दर्शने कान्दिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः॥

पं. का. सं. ११६-२४

इदं पद्यं राज्ञश्चित्तवृत्तेः दयार्द्रत्वं निर्दयत्वं, मृदुत्वं कर्कशत्वं, लुब्धत्वमलुब्धत्वं, धीरत्वं भीरुत्वं, चेति परस्परविरुद्धौ धर्मौ प्रतिपादयन् "लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति" इति भवभूतेः भावमावेदयति। राजविषयकरतिभावोपस्कारकोऽयमुल्लेखः।

शहाबदीनमधिकृत्य रचितश्लोकोऽयमाकर्ण्यताम्। कीदृशी कल्पनाशक्तिः!

भूमीनाथ शहाबदीन भवतस्तुल्यो गुणानां गणै-
रेतद्भूतभवप्रपञ्चविषये नास्तीति किं ब्रूमहे।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये-
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः॥

पं. का. सं. १०१-१५०

यदि ब्रह्मा प्रसिद्धपञ्चभूतातिरिक्तस्वनिर्मितकारणैः नवां सृष्टिं भावयेत् तथापि भवत्समो न भवतीत्युक्तम्। अत्र सर्वथैवोपमानिषेधाख्योऽसमालङ्कारः। असमा च कल्पना रीतिः।

एवंविधवर्णनातुष्टस्स राजा तस्मै किं किं नाददात? स यदेवावृणुत तदेवाहृतमपश्यत्। प्रार्थितां नवनीतकोमलाङ्गीं यवनीमपि सार्वभौमः तस्मै ददाविति जनश्रुतिश्श्रूयते स्म। युक्तमेवैतत् "स्तोत्रं कस्य न तुष्टये।"

नवाबासफखानस्य वर्णनं पश्यत। तच्च सर्वेषां किं न मनो विनोदयति?

सुधेव वाणी वसुधेव मूर्तिः
सुधाकरश्रीसदृशी च कीर्तिः।
पयोधिकल्पा मतिरासफेन्दोः
महीतलेऽन्यस्य न हीति मन्ये॥

पं. का. सं. २०१-१००

अमृतमयी वाणी, क्षमामयी मूर्तिः, चन्द्रसदृशी कीर्तिः सागरसदृशी बुद्धिश्च आसफेन्दोरित्यतोऽन्यत् किमु वक्तव्यं तत्सर्वमुक्तं यद्वक्तव्यम् ।

राजवर्णनप्रस्तावे संक्षेपेणाभिहितं हृद्यमिदं पद्यं कवेर्भावनाबलं बलान्निवेदयति ।

वसु दातुं यशो धातुं विधातुमरिमर्दनम् ।
त्रातुं च सकलां पृथ्वीं अतीव निपुणो भवान् ।।

पं. का. सं. १०३-७६

अत्र महामतेर्महीपतेः धनदान-यशस्सम्पादन-शत्रुमर्दन-पृथ्वी पालनादिकं मुख्यक्रियाजातं मुख्यतयात्र वर्णितम् ।

नीतिविदामग्रण्यो नराधपतेः यत्कर्तव्यं तदतिरमणीयया शैलया वर्णितं सत् सहृदयहृदयानामानन्दाय कल्पते ।

वासयति हीनसत्त्वान्
अतिसत्त्वानुद्धतान् विवासयति ।
त्रासयति सकलशत्रून्
नीतिविदामग्रणीर्नराधिपतिः ।।

पं. का. सं. २००-६०

हीनानां निवासं, उद्धतानां प्रवासं, रिपूणां संत्रासं चायं कल्पयति । निशम्यतामिदं सुश्लिष्टं पद्यम्--

विज्ञत्वं विदुषां गणे, सुकवितां सामाजिकानां कुले
माङ्गल्यं स्वजनेषु, गौरवमथो लोकेषु सर्वेष्वपि ।
दुर्वृत्ते शनितां, नृलोकवलये राजत्वमव्याहतं,
मित्रत्वं च वहन्नकिञ्चनजने, देव, त्वमेको भुवि ।।

हृद्यमिदं पद्यं शब्दशक्तिमूलकरूपकालङ्कारध्वनेस्समीचीनमुदाहरणम् । अत्र राज्ञो विज्ञत्वं, कवित्वं, माङ्गल्यं, गौरवं, अशनित्वं, नृपत्वं, मित्रत्वं च शक्त्या बोधयदिदं पद्यं, बुधत्वं, शुक्तत्वं, कुजत्वं बृहस्पतित्वं, मन्दत्वं, चन्द्रत्वं, सूर्यत्वं चेति नवग्रहरूपवत्त्वं व्यक्त्या बोधयति । राज्ञो विज्ञत्वादयो गुणाः अत्र रमणीयया रीत्या वर्णितास्सचेतसां चेतसाममन्दमानन्दमुपजनयन्ति ।

पद्यमिदं पश्यत कियदिव हृद्यम्—

द्विनेत्र इव वासवः *करयुगो विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥

पं. का. सं. ११५-२३

मालारूपायास्स्वरूपोत्प्रेक्षाया उदाहरणमिदं पद्यम् । इदं राज्ञ ऐश्वर्यं, प्रतापं, आह्लादकत्वं, सौन्दर्यं, गाम्भीर्यं, विद्यातिशयं च, अतिशयेन व्यञ्जयति । सहृदयानां हृदयानि सम्यग्रञ्जयति । शत्रूणां हृदयानि भञ्जयति च ॥

एवं राजवर्णनपराणि सन्ति जगदाभरणे प्राणाभरणे च बहूनि हृद्यानि पद्यानि । तथापि ग्रन्थगौरवभयाद्विरम्यते ।

## विद्यानाथविद्याधरयोरनुकरणम्

क्रीस्तोः परं चतुर्दशशताब्दीयः सकलविद्यासनाथो विद्यानाथः एकशिलाधिपतेः काकतीयभूपतेः प्रतापरुद्रस्य कीर्तिं महितया स्वकवि-

---

* करयुगमस्यास्तीति करयुगः अर्श आद्यच् । करयोर्युगं यस्येति वैयाकरण निकुञ्चितो व्यधिकरणबहुव्रीहिर्वा ।

तया सङ्कीर्त्य अजरामरां विश्वतः प्रसृमरां कीर्तिं लेभे। एकावलीकारस्सकलविद्याधरो विद्याधरोऽपि, उपमितमहेन्द्रस्य नृसिंहक्षितीन्द्रस्य कीर्तिं रुचिरया स्वकवितया संश्लाघ्य स्वयमपि महतीं कीर्तिं लेभे। एतयोः प्राचीनालङ्कारिकयोरनुकुर्वन् कविराजो जगन्नाथोऽपि दिल्ली-नगराधीशस्य शहाजहानस्य तदितरेषां च कीर्तिं श्रुतिहितया स्वकवितया सङ्कीर्त्य सुमनसां मनसामसीमानन्दमङ्कुरयामास।

## कवितालतायाः कृष्णकल्पद्रुमाश्रयणम्

कवितायाः, शक्त्यपरपर्याया प्रतिभा व्युत्पत्त्यभ्यासौ च समुदितो हेतुरिति मम्मटादयः। वाग्भटस्तु प्रतिभैव काव्यकारणमिति प्रतिभायाश्च व्युत्पत्त्यभ्यासौ कारणमित्यब्रवीत्। जगन्नाथोऽपि क्षोदक्षममिमं पक्षमनुसृत्य, व्युत्पत्त्यभ्यासाविव, देवता-महापुरुष प्रसादादिजन्यमदृष्टमपि प्रतिभाकारणमिति न्यरूपयत्। प्रतिभा नाम काव्य घटनानुकूलशब्दार्थोपस्थितिः। व्युत्पत्तिर्नाम सर्वेषां शास्त्राणां परिचयः। अभ्यासो नाम काव्यतत्त्वविद्भिः काव्यप्रणेतृभिश्च साकं काव्यमीमांसा। यस्तु प्रतिभावानपि व्युत्पत्त्यभ्यासाभ्यां सहितो भवति स एवाग्रगण्यः कविरिति, काव्यमीमांसकानामभिप्रायः। अधीतसकलशास्त्रः, कृतप्राचीनकाव्यपरिचयः, स्वतस्सिद्धप्रतिभश्च जगन्नाथः श्रुतिविहितां भावबन्धुरां रसभरितां, गुणसहितां, दोषरहितां, जनहितां, महितां स्वकवितां प्रावर्तयत्। अस्ति खल्वयं प्रवादः यत् --

कविता भुवि तावदेव वन्ध्या
भविता, यावदयं न वर्ण्यते हि।
तरसा सुरसालवद्वदान्यः
सरसालापवशंवदो मुकुन्दः॥

अतः कवितालता चास्य कृष्णकल्पद्रुममाश्रिता नितरां शुशुभे। अस्य करुणालहरी, श्रीकृष्णस्य स्तुतिं विदधती सचेतसां चेतांस्याकर्षति।

स्मृतापि तरुणातपं करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम्।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी॥

पं. का. सं. ७५-३

रसगङ्गाधरप्रारम्भस्थमिदं पद्यं, तापहारिणि, गोपीभिः परिवृते, यमुनातीरतरुवासिनि, श्रीकृष्णे परां भक्तिं निरूपयति।

मृद्वीका रसिता, सिता समशिता, स्फीतं निपीतं पयः
स्वर्यातेन सुधाप्यधायि, कतिधा रम्भाधरः खण्डितः।
तत्त्वं ब्रूहि, मदीय जीव, भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः॥

पं. का.सं. ७५-७

समप्राधान्याभ्यां शब्दार्थचमत्काराभ्यां सहितमिदं पद्यं, जन्मान्तरेभ्य आगतां, सुदृढां, श्रीकृष्णभक्तिं सुन्दरया सरण्या, निवेदयति। आवेदयति च तदितरेष्वनासक्तिम्। अत्र सन्ति भूयांस्युदाहरणानि। तथापि विरम्यते "अति सर्वत्र वर्जयेत्" इति सिद्धान्तात्।

## नराङ्कितत्त्वमुचितमेव

भगवदङ्कितां रचनां कुर्वन्नप्ययं स्वरचनां नराङ्कितामकरोत्। नरस्तुतिश्च नोचितेति केषाञ्चिदाशयः। अत एव त्रिमूर्त्यात्मकतया

वर्णितो भगवान् व्यासोऽपि,

"असत्कीर्तनकान्तारपरिवर्तनपांसुलाम् ।
वाचं शौरिकथालापगङ्गयैव पुनीमहे ।।"

इति वदन्, परं परितप्य हरिवंशवर्णनेन प्रापद्यत हृदयनिर्वृतिम् । विद्यानाथादयः स्वरचना नराङ्किता विधाय, नरपतिप्रसादभाजनान्यभूवन् । जगन्नाथोऽपि नराङ्कितत्वं दोष इति जानन्नपि यवनसार्वभौमानां शहाजहानादीनां सन्निधौ, जगत्सिंहस्य सन्निधौ, सहृदयचूडामणेः प्राणनारायणस्य सन्निधौ, उन्नतपदवीरधितिष्ठतां आसफखानादीनां सन्निधौ च निवसन् तेषां प्रशंसां कुर्वन्, अनवद्यानि हृद्यानि पद्यानि रचितवान् । वयं त्वत्रैवं प्रतीमः । दैवांशसम्भूतानां स्वयंविष्णुस्वरूपाणां, यथाधर्मं सप्रजाः प्रजा रक्षतां च महीक्षितां वर्णनं न दोषायेति । अत एव युक्तमुक्तमभियुक्तैः "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः ।।" "नाविष्णुः पृथिवीपतिः" इति च ।

यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ।।

गीता १०-४१

इति गीताचार्यस्य वचनमप्यत्र प्रमाणम् ।

## कवितामधिकृत्य पण्डितराजाभिप्रायः

अमृतं, चन्द्रिका, ललितकविता, सुजनश्च सर्वेषां सम्मोदाय सम्पद्यन्ते । लोके नरजन्म, तस्मिन् वैदुष्यं, तत्र सत्कविता, कवितायां परिणामश्च पुण्यहीनेन दुष्प्राप इति कवितामधिकृत्य समीचीन आशयः कविराजस्य । सुकवितां विना वदनं, साध्वीं वनितां विना सदनं, धनितां विना राज्यं च न नितान्तं भवति कमनीयमिति जगन्नाथो ब्रवीति । स एवाह —

निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रव-
न्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम् ।

काव्यं तर्हि सखे सुखेन कथय त्वं सम्मुखे मादृशां
नो चेद्दुष्कृतमात्मना कृतमिव स्वान्ताद्बहिर्मा कृथाः ।।

पं. का. सं. ७८–३०

## कवितागुणाः

अस्य कवितायां शब्दसौष्ठवं, अर्थगाम्भीर्यं, कल्पनापाटवं विविधालङ्कारविनिवेशननैपुण्यं, शय्यामार्दवं, गुणगुम्फनं, नानार्थसंयोजनं व्यङ्ग्यार्थघटनं, चेत्यष्टौ गुणा विलसन्ति ।

मधुरा ओजस्विनी प्रसादवती इति प्रथितासु तिसृषु रचनासु अयमतीव निपुणो दृश्यते । क्रमेण तिसृणामुदाहरणानि ।

तान्तमालतरुकान्तिलङ्घिनीं
किङ्करीकृतनवाम्बुदत्विषम् ।
स्वान्त मे कलय शान्तये चिरं
नैचिकीनयनचुम्बितां श्रियम् ।।

पं. का. सं. ५४–७९

शान्तरसगतमाधुर्यस्याभिव्यञ्जिका रचनेयम् । अस्यां रचनायां सानुस्वारकोमलवर्णबन्धत्वं दृश्यते ।

नवोच्चलितयौवनस्फुरदखर्वगर्वज्वरे
मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति ।
अयं पततु निर्दयं दलितदृप्तभूभृद्गल-
स्खलद्रुधिरघस्मरो मम परश्वथो भैरवः ।।

पं. का. सं. ९८–११८

रौद्ररसगतमोजोगुणं व्यञ्जयतीयं रचना। दीर्घसमासभूयिष्ठा च।

वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदा-
स्तां स्वप्नेऽपि न संस्मराम्यहमहम्भावावृतो निस्त्रपः।
इत्यागश्शतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-
स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः॥

पं. का. सं. ७५–५

एवं तिसृषु रचनासु निपुणो जगन्नाथः, रसानुगुण्येन रचनास्तिस्रोऽपि स्वीकृत्य स्वकवितां निर्व्यूढवान्। अनेन शब्दार्थचमत्कारौ स्वकवितायां तुल्यतया प्रदर्शितौ।

## वृत्त्यनुप्रासः छेकानुप्रासश्च

वृत्त्यनुप्रासः छेकानुप्रासश्च प्रतिश्लोकमुपयुक्तौ प्राधान्येन। काव्यजीवितभूतस्य व्यङ्ग्यार्थस्य आधारतया शरीरस्थानीयायाः पदरचनायाः काव्ये महन्महत्त्वम्। काव्यकृतकान्तासम्मितोपदेशाय विनेयानुन्मुखीकर्तुं सोऽयं शब्द एवोपतिष्ठते। यदि पदरचनैव पूर्वतश्श्रोतुर्मानसमाकर्ष्टुं न प्रभवेत् तर्हि अर्थोपरि विचारमेव कः कुर्यात्? पदविन्यासमात्रेणैव कवेः प्रतिभा प्रतिभायात्सर्वेषाम्। अत एवेदं प्रशंसापरं पद्यद्वयं प्रवृत्तं भवेत्।

"किं वा कवितया राजन् किं वा वनितया तया।
पदविन्यासमात्रेण मनो नापहृतं यया।"

"अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनवगतपरिमलापि च, हरति दृशं मालतीमाला॥" इति।

वृत्तयश्च त्रिविधाः, परुषा ग्राम्योपनागरिकाभेदात्। त्रिविधोऽपि वृत्त्यनुप्रासः कविराजेनोपयुक्तः। अनुप्रासप्रियता चास्य बह्वभिनन्दनीया।

आद्यनुप्रासस्तु हृदयङ्गमया सरण्या बहुषु स्थलेष्वनेन गुम्फितः। यथा "भूमीभूषण भूषयन्ति भुवनाभोगं भवत्कीर्तयः।" (पं. का. सं. १०५-२०६) यथा वा-"मुग्धे मा कुरु मानमाननमिदं राकापतिर्जेष्यति", "विलोचनविनिस्सरद्बहलविस्फुलिङ्गव्रजः" "स्मेरैः स्मरस्य सचिवै सरसावलोकै।" (पं. का. स. ५६-५८)

अन्त्यानुप्रासो यथा—

सा मदागमनबृंहिततोषा जागरेण गमिताखिलदोषा॥

पं. का. सं. ६२-१३१

वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी॥

पं. का. सं. ५३-२३

"यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः।" "निमग्नस्स्यां कस्यांचन नवनभस्याम्बुदरुचि" इति। अस्मिन् पद्यभागे त्रिरावृत्तस्य स्यामित्यस्य त्रिधाभिन्नत्वं पश्यत। स्याम् इत्येकं क्रियापदम्। स्यामित्यपरः प्रत्ययः। स्यामित्यन्या प्रकृतिः। परुषानुप्रासस्य उदाहरणं यथा—

दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डध्वनि-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम्।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशस्स्मरेत्॥

पं. का. सं. १४४-१४

ग्राम्याया उदाहरणं यथा—

लोलालकावलिवलन्नयनारविन्द-
लीलावशंवदितलोकविलोचनायाः॥

उपनागरिकाया उदाहरणं यथा—

तान्तमालतरुकान्तिलङ्घिनीं किङ्करीकृतनवाम्बुदत्विषम्।
स्वान्त मे कलय शान्तये चिरं नैचिकीनयनचुम्बितां श्रियम्॥

सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपतेः ।
सन्ध्याशोणाम्बरगतनवेन्दुलेखायितः पातु ॥

पं. का.सं. १०५–२०७

अनुप्रासः पण्डितराजपद्येषु तथा पदं लेभे यथान्यदीयेषु पद्येषु कणिकयापि सा सुषमा नादृश्यत । पश्यत––

"नितरां हितयाद्य निद्रया मे
बत यामे चरमे निवेदितायाः ।
सुदृशो वचनं शृणोमि यावत्
मयि तावत्प्रचुकोप वारिवाहः ।।

पं. का. सं.९९–१२२

लवङ्गीसप्तकादुद्धृतमिदं पद्यद्वयं अनुप्रासातिशयं प्रकाशयति––

"न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदापि ।
इयं सुस्तनी मस्तकन्यस्तहस्ता लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥

पं. का. सं. १९०–५८२

यवनी नवनीतकोमलाङ्गी शयनीयं यदि नीयते कदाचित् ।
अवनीतलमेव साधु मन्ये न वनी माघवनी विनोदहेतुः ॥

पं. का. स. १९०–५८५

## व्रजभाषाप्रभावः

प्राकृतकवीनां व्रजभाषाकवीनां च चरमसीमामापन्नां मृदुमधुर-मनोहरपदां रचनां मनसि निधाय ताननतिशयितुमिव मृद्वीकामधुरां स्वर-चनामयमतानीत् । पण्डितराजो हि प्रतिभावतां चूडामणिरासीत् । अत

एव संस्कृतसाहित्ये तेन तादृशो मार्मिको विचारः प्रवर्तितः यस्याग्रे व्रजभाषापोषका अपि निष्प्रभा अभवन् । मधुररचनायां इतरेषां पद्यानि दोषदूषितानीवादृश्यन्त । 'अमरुककवेरेकं पद्यं प्रबन्धशतायते'' इति कीर्तितानि शृङ्गाररसस्यन्दीनि हृद्यान्यमरुकस्य पद्यान्यपि परीक्षानिकषोपले निक्षिप्तानि विलष्टाक्षराणि प्रतिकूलानि च पर्यगण्यन्त । पण्डितराजस्तु मधुरसङ्घटनायां तान्युदाहरणान्यदात्, येषु प्रतिपक्षी न कथञ्चिदपि दोषमाविष्कर्तुं प्रभवेत् । यथा—

कस्तूरिकातिलकमालि विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम् ।
प्रौढिं भजन्तु कुमुदानि मुदामुदाराम्
उल्लासयन्तु परितो हरितां मुखानि ।।

पं. का. सं. ५१-४

## श्रीशङ्करभगवत्पादानुकरणम्

''पीयूषममृतं सुधा'' इत्यमरोक्तिमनुसरता, पीयूषलहरी, अमृतलहरी, सुधालहरीति लहरीत्रयं, लोकमातरमधिकृत्य लक्ष्मीलहरी जगत्पितरमधिकृत्य करुणालहरीति लहरीद्वयं, एवमाहत्य लहरीपञ्चकं निर्मितं निर्माणमार्मिकेन जगन्नाथेन । लहरीकाव्यनिर्माणमार्मिकेष्वग्रगण्याश्श्रीशङ्करभगवत्पादाः । आनन्दलहरी शिवानन्दलहरी सौन्दर्यलहरीति लहरीत्रयमेभिः प्रणीतम् । एतच्च बहूनां लहरीकाव्यानां निर्माणे मार्गदर्शकमभवत् । एभिस्स्वीकृतं वृत्तं शिखरिणी बहुभिःस्वीकृतं सत् विदुषां मुदमुदारामुदघोषयत् । पुरा किल तत्रभवतो भवभूतेरपि शिखरिणीवृत्तनिर्माणचातुरी रचनाचतुरैरभ्यनन्द्यत, यया ''भवभूतेश्शिखरिणी निरर्गलतरङ्गिणी'' इति सूक्तिर्निरमीयत । भामिनीविलासः आसफविलासः इति विलासद्वयं, जगदाभरणं प्राणाभरणं इति आभरणद्वयं चानेन निर्मित

सद्विजयतेतराम् । अद्याप्यनुपलब्धा यमुनाचम्पूः, लेशत उपलब्धापि हृद्यगद्यविनिवेशितमनसां सुमनसां मनसां सम्पादयत्यसीमानमानन्दम् ।

"तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानायाः भगवत्या भागीरथ्यास्सखी ।" पश्यत इदं गद्यं कियदिव हृद्यम् ?

"अनवरतविद्वद्द्रुमद्रोहिमाद्यद्द्विपोद्दामदर्पौघविद्रावणप्रौढपञ्चाननः ।" इतीदं गद्यं पद्यादधिकतरं शोभामादधद्रचयितुर्गद्यनिर्माणमार्मिकतां निरूपयति ।

## लक्ष्मीलहरी

एकचत्वारिंशता शिखरिणीभिर्निबद्धेयं लक्ष्मीलहरी । नाम्नैवेयं लक्ष्म्यास्स्तव इति ज्ञायते । पादादिकेशान्तवर्णनमत्र रमायाः कृतम् । शय्यामार्दवं, अर्थगाम्भीर्यं, शब्दसौष्ठवं चेति गुणा अतिमात्रमत्र गणनामर्हन्ति । प्राचीनरचिता लक्ष्मीस्तवा बहवो बहुवारमनेन सम्यगवलोकिता इति विषयः पठतां अवश्यं गोचरो भविष्यति । मृद्वीकामधुमाधुर्यधुर्याणि हृद्यान्यस्य पद्यानि भक्तशिखामणेर्हृदयान्निरर्गलं निर्गतानीव, नतु बलात्कवेर्लेखिन्या उल्लिखितानीव। पश्यत पद्यमिदं कथमिव हृदयमाकर्षति ।

प्रवालानां दीक्षागुरुरपि च लाक्षारुणरुचां
नियन्त्री बन्धूकद्युतिनिकरबन्धूकृतिपटुः ।
नृणामन्तर्ध्वान्तं निबिडमपहर्तुं तव किल
प्रभातश्रीरेषा चरणरुचिवेषा विजयते ॥

पं. का. सं. २३–७

## करुणालहरी

वियोगिनीवंशस्थाभ्यां विरचितेयं करुणालहरी भगवतो यामुनाचार्यस्य स्त्रोत्ररत्नं किञ्चिदनुकरोतीव। वेदान्तदेशिकस्य दयाशतकं, श्रीधरवेङ्कटेशार्यस्य दयाशतकं च एतल्लहरीपठनसमये नूनं स्मृतिगोचरीभवतः। देवतानां वर्णनं पादादिकेशान्तं मानवानां वर्णन केशादिपादान्तं च कर्तव्यमित्यस्ति नियमः। स च पण्डितराजेन समुल्लङ्घितः, तत्र हेतुं न विद्मः। भक्त हृदयगतबाधामावेदयन्नयं श्लोकः, भगवतः करुणां प्राप्तुं भागवतस्य वेदनामावेदयति।

विहाय संसारमहामरुस्थली-
मलीकदेहादिमिलन्मरीचिकाम्।
मनोमृगो मे करुणामृताम्बुधे
विगाढुमीश त्वयि गाढमीहते॥

पं. का. स. १७-३

अत्र सुन्दरोऽनुप्रासः, सुरुचिरमर्थगाम्भीर्यं हृदयवेदनारूपक रूपकं च।

भगवत्करुणातिरिक्तस्य पदार्थस्य निरसनपूर्वकं, करुणाकटाक्ष एवापेक्ष्यतेऽत्र रचयित्रा। पश्यत—

न धनं न च राज्यसम्पदं
न हि विद्यामिदमेकमर्थये।
मयि धेहि मनागपि प्रभो
करुणाभङ्गितरङ्गितां दृशम्॥

पं. का. सं. १८-१६

किं बहुना—आदित आरभ्य आन्तं कविना भगवतः करुणालवलाभाय कृतो यत्न एवात्र विलोक्यते।

## सुधालहरी

त्रिशता स्रग्धराभिरुपनिबद्धेयं सुधालहरी। अस्यां "आरोग्यं भास्करादिच्छेत्" इति न्यायमनुसृत्य सूर्यमण्डलवर्ती नारायणः सम्यक् स्तवविषयीकृतः। यद्यपि सूर्यस्तवो बहुभी रचितपूर्वः, तथापि—बाणश्वशुरेण मयूरेण कृतं सूर्यशतकमेव पण्डितराजस्य रचनायां दोहद-कार्यभूत्। इयमनुप्रासबहुला दीर्घसमासभूषिता च। ओजोगुणोपेतापि कान्तिप्रसादाभ्यां संवलिता। अस्याः पारायणेन पण्डितराजस्य कविताकलायां परिणामः, प्रज्ञाया नवनवोन्मेषश्च स्फुटीभवतः। शब्दार्थचमत्कृत्योस्साम्यं सम्पादयदिदं पद्यं सहृदयानामानन्दाय कल्पते। पश्यत—

उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पन्धयानां
निस्तारश्शोकदावानलविकलहृदां कोकसीमन्तिनीनाम्।
उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
संघातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत्॥

पं. का. सं. ३१–१

अत्र वृत्त्यनुप्रासप्राचुर्यादोजोगुणप्रकाशकत्वाच्च शब्दस्य, प्रसादगुणयोगादनन्तरमेवाधिगतस्य रूपकस्य हेत्वलंकारस्य वा वाच्यस्य चमत्कृत्योस्तुल्यस्कन्धत्वात्सममेव प्राधान्यम्।

## अमृतलहरी

दशभिश्शार्दूलविक्रीडितैर्विरचितेयममृतलहरी यमुनामाहात्म्य-वर्णनपरा। श्रीकृष्णभक्तो जगन्नाथः श्रीकृष्णप्रियां यमुनां महता वैभवेन वर्णयितुमुत्सुको बभूव। श्रीकृष्णस्य बाल्यक्रीडानां जलावगाहनानां

कालियमर्दनस्य च प्रधानं स्थानं यमुना। यमुनाजलमिव नीलवर्णश्च कृष्णः। अतो यमुनावर्णनं श्रीकृष्णवर्णनमेवेति कवेर्दृढो विश्वासः।

हृदयहारि कल्याणकारि, श्रमहारि यमुयावारि वर्णयदिदं पद्यं सगुणं सालंकारं सरसं च सत् कविराजस्य यमुनायां यामुने च परमां भक्तिं व्यञ्जयति।

पायंपायमपायहारि जननि स्वादु त्वदीयं पयः
नायंनायमनायनीमकृतिनां मूर्तिं दृशोः कैशवीम्।
स्मारंस्मारमपारपुण्यविभवं कृष्णेति वर्णद्वयम्
चारंचारमितस्ततस्तव तटे मुक्तो भवेयं कदा॥

पं. का. सं. १४-८

## पीयूषलहरी

द्विपञ्चाशता शिखरिणीभिर्निबद्धेयं गङ्गालहरीति विख्याता पीयूषलहरी। पञ्चस्वपि लहरीषु पण्डितराजस्यास्यामेव परं प्रीतिरिति विभाव्यते। यतो बहूनि पद्यान्यस्या एवं रसगङ्गाधरे उदाहृतानि। श्रीशंकरभगवत्पादानां गङ्गाष्टकं बहुवारं पठितवतानेन सानुप्रासेन शिखरिणीवृत्तेन गङ्गालहरी रचिता स्यात्। श्रीशङ्करस्य गङ्गाष्टकादुद्धृते पद्येऽस्मिन्निधीयतामेकवारं दृष्टिः —

"कुतोऽवीचिर्वीचिः तव यदि गता लोचनपथं
त्वमापीता पीताम्बरपुरनिवासं वितरसि।
त्वदुत्सङ्गे गङ्गे पतति यदि कायस्तनुभृतां
तदा मातश्शातक्रतवपदलाभोऽप्यतिलघुः॥

यवनीसंसर्गदोषदूषितोऽयं गङ्गासकाशात् द्विपञ्चाशत्सोपानान्तरिते निजगृहे स्थितस्सन् तत्रैव जाह्नव्यागमनस्पर्शनेन आत्मशुद्धिं कामयमानः गङ्गालहरीं प्रणीतवानिति जनश्रुतिश्श्रूयते स्म। आन्ध्रभाषायामनेकैरनूदितेयं लहरी।

अत्र सर्वेऽपि श्लोकाः सगुणास्सालङ्कारास्सानुप्रासा स्सभावाश्च। यथा—

जडानन्धान् पङ्गून् प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन्।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब त्रातुं त्वमिह परमं भेषजमसि॥

पं. का. सं. ४–१५

यथा वा

निधानं धर्माणां किमपि च विधानं नवमुदाम्
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः।
समाधानं बुद्धेरथ खलु तिरोधानमधियाम्
श्रियामाधानं नः परिहरतु तापं तव वपुः॥

पं. का. सं. ५–१८

कविराजस्य प्रतिभां प्रकटयितुं पद्यद्वयमिदं किं न पर्याप्तम्?

## II प्रतिभावैभवम्

### पाण्डित्यवैभवम्

### शब्दशास्त्रपाण्डित्यम्

पण्डितराजो जगन्नाथः कवितविषयिणीमिव शास्त्रविषयिणीमपि प्रतिभाझरीं प्रावहयदुद्वेलतया। सर्वविद्याधरान्निजपितुरेव सर्वाणि शास्त्राणि सम्यगधीतवानयम्। पदे वाक्ये प्रमाणे वेदान्ते चायं कृतभूरिपरिश्रमो दृश्यते। क्रीस्तब्दीयसप्तदशशतके व्याकरणशास्त्रे परिश्रमः इतरशास्त्रैस्साकं बहुधा क्रियते स्म। स समयो वादयुगमासीत्। तस्मिन् वादयुगे प्रख्याता बहवः पण्डिता आसन्। तेष्वन्यतमः सकलसद्गुणमण्डितो गणनार्हः पण्डितः खण्डदेवः। सकलशास्त्राभिज्ञो जगन्नाथस्य पिता महामहोपाध्यायः पेरुभट्टः तत्रभवतः खण्डदेवस्य पादपद्मसन्निधौ जैमिनीयं वाराणस्यामध्यगीष्ट। तस्मिन् काले भट्टोजीनामको महाराष्ट्रीयः कश्चिद् वैयाकरणसार्वभौम आसीत् यः खलु मुनित्रयविरचितं शब्दशास्त्रमहोदधिं निर्मथ्य वैयाकरणसिद्धान्तकौमुदीं निर्माय महतीं प्रतिष्ठां लेभे। एतन्निर्माणानन्तरमेव शब्दशास्त्रस्य रीतिरन्यादृशी समपद्यत। स्वरचितायाः कौमुद्याश्चानेन प्रौढमनोरमेति व्यरचि व्याख्यानम्, यत् खलु पठनपाठनाभ्यामतिमात्रं राराष्टि। शब्दकौस्तुभमिति ग्रन्थरत्नमपरं प्रणीतम्। यद् बोधयति सम्यगार्थिकानंशान्। मनोरमोमार्धदेहं लघुशब्देन्दुशेखरं नाम प्रौढमनोरमाव्याख्यानं प्रणीतवान् नागेशभट्टः, यः परिभाषेन्दुशेखरं नाम स्वतन्त्रग्रन्थं, मञ्जुलां मञ्जूषां च रचितवान्। मनोरमाकुचमर्दनं नाम मनोहरं खण्डनं रचितवता पण्डितराजेन तादृशो भट्टोजीदीक्षितोऽपि शास्त्ररणरङ्गे शस्त्रप्रहारविषयीकृत इति न न हि विदितं सर्वेषाम्। भट्टोजीदीक्षितः स्वगुरोश्शेषश्रीकृष्णपण्डितस्य अभिप्रायान् मनोरमायां खण्डितवानिति हेतोः जगन्नाथस्स्वगुरुद्रोहमसहमानः गुरुद्रोहिणि दीक्षिते वाग्युद्धाय सन्नद्धवान्। अत एवास्य सुमहच्छब्दशास्त्रपाण्डित्यमनुमीयते स्म।

उपमालङ्कारप्रस्तावे "कालोपसर्जने च तुल्यम् इत्यादावपि अशिष्यत्वादिना प्रधानप्रत्ययार्थं वचनसादृश्यस्यात्रापि प्रतिपादनात्।" इत्यादौ अप्पदीक्षितरीत्या उपमालक्षणस्यातिव्याप्ति वदता प्रकटितं शब्दशास्त्रपाण्डित्यम् ।

## न्यायशास्त्रवैदुष्यम्

वादशास्त्रे तर्कशास्त्रे निष्णातौ जगदीशगदाधरौ जगन्नाथात किञ्चिद्यवीयांसौ पण्डितौ। तस्मिन् काले नव्यन्यायधूलिरहितानां विमर्शनानां प्रचार एव नासीत् । शास्त्रज्ञाः पण्डितास्तत्र तत्र प्रचलितासु सभासु प्रतिवादिनो वाग्विवादाय समाहूय तैः कलहायन्ते स्म। नव्यन्यायानुगतया प्रौढतावच्छेदकावच्छिन्नयैव भाषया वादप्रतिवादौ उभाभ्यां क्रियेते स्म। तदानीं वादरङ्गे प्रवेष्टुकामानां पण्डितानां नव्यन्यायशास्त्रस्य अध्ययनमावश्यकमभूत् । अतस्समधीतन्यायशास्त्रोऽयं, स्वरचनां न्याय' शास्त्रमुद्रामुद्रितामकरोत् । काव्यलक्षणप्रस्तावे "रमणीयार्थप्रतिपादकशब्दः काव्यम्" इति सुरुचिरमारभ्य सहृदायानामानन्दं कल्पयन्नेव- "इत्थं च चमत्कारजनकभावनाविषय-अर्थप्रतिपादकशब्दत्वम्, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्ट-जनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्" इति परिष्कारं कुर्वन् सुकुमारमतीनां मतीरतीव कम्पयते स्म।

"मृद्वीका रसिते" ति हृद्ये पद्ये विषयं विवरिषता अत्र निष्कृष्टजीवसम्बोध्यकपरिदृश्यमानस्थूलदेहेन्द्रियादिचेतनाचेतनसंघातात्मक– अस्मत्पदबोध्यकर्तृकप्रश्नविषयेणार्थेन वस्तुना तथाभूतेन भगवन्नाम्नो अनेकजन्मवृत्तान्ताध्यक्षीकरणकारणयोगसिद्धिविशेषतादात्म्याध्यवसाय– रूपातिशयोक्तिर्व्यज्यते" इति सौष्ठवौदार्यसंवलितां न्यायग्रहग्रन्थिलां च पङ्क्तिमारचयता जगन्नाथेन कियदिव शास्त्रपाण्डित्यं न

प्रदर्शितमिति सहृदया एव विदाङ्कुर्वन्तु। अभिधादिवृत्तित्रयविमर्शनं कुर्वतानेन स्वीकृता सरणिः न्यायशास्त्रसरणिं नातिक्रामति स्म। अलङ्कारेषु बोधं विचारयतानेन नूनमनुसृता पद्धतिः न्यायशास्त्रेऽस्य गाढतरा व्युत्पत्तिरस्तीति बोधयति स्म। न्यायशास्त्रवज्रकवचं धृत्वैवायं शास्त्रान्तरप्रविष्टानां साहित्यशास्त्रे समुचितं स्थानं नास्तीति नियतं निरूपितवान्।

## वेदान्तशास्त्रपरिश्रमः

न्यायवेदान्तयोरनिर्भेद्यद्वन्द्वतया न्यायशास्त्राध्ययनानन्तरं वेदान्तशास्त्राध्ययनमनेन कृतं स्यात्। विना वेदान्तशास्त्राध्ययनं न्यायशास्त्रस्य निष्प्रयोजकत्वं निरूपितं सूरिभिः। तर्क तर्कशमतीनां सत्यज्ञानानन्तस्वरूपस्य ब्रह्मणः प्रतिपादकस्य वेदान्तशास्त्रस्य अध्ययनं विना मुक्तेरसम्भवात् नूनं वृष्णिवरेण्यं श्रीकृष्णं स्मरता भक्तवरेण्येन वेदान्तशास्त्रे भूयान् परिश्रमः कृत इति दृढो मे विश्वासः। अत एव च "ईशानो भूतभव्यस्य स एवाद्य स उ श्वः" इति वेदान्तवाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवोऽत्र प्रतिपाद्यते ? उत ईश्वर इति संशये, जीव एवेति पूर्वपक्षे च "शब्दादेव प्रमितः" इति सूत्रितमुत्तरमीमांसाकारैः बादरायणचरणैः।" इत्युक्तं जगन्नाथेन व्यञ्जनामङ्गीकुर्वता। योगरूढिशब्दे केवलयोगशक्तया– जायमानः जीवार्थो यथा बाधितस्तथा जलजादिपदेष्वपि योगार्थो बाध्येत। ततश्च जलजानां मूर्खपुत्राणां इत्यर्थलाभाय व्यञ्जनावश्यकीति उदाहरणस्य तात्पर्यम्।

## मीमांसाशास्त्रपरिचयः

मीमांसाशास्त्रे कृतपरिश्रमोऽपि, अयं मीमांसापरिचयं कुत्रापि न प्राकाशयत्। काव्यमीमांसकानामस्माकं वाक्यमीमांसकैस्सह सङ्गतिः कथं संगच्छत इति वा, पदे पदे, "पदे जुहोति"

"उत्तरार्थे जुहोति" "आहवनीये जुहोति" इति वाक्यान्युदाहरति चित्रमीमांसाकारे अप्पाय्यदीक्षिते विरोधाद्वा समुंज्झितोऽनेन मीमांसाशास्त्रप्रसङ्गः ।

## किंनामालङ्कारशास्त्रम् ?

किंनामालङ्कारशास्त्रं ? यस्मिन् खल्ववगते काव्यस्य निर्माणे स्वरूप, दोष, गुणालङ्कारादीनामवधारणे च शक्तिरुन्मिषति तदलङ्कारशास्त्रम् । तथाच व्याकरणं भाषायां व्युत्पत्त्यै अपेक्ष्यते तथा अलङ्कारशास्त्रमपि काव्ये नैपुण्याय अपेक्ष्यते । न केवलं, अलङ्कारशास्त्रं विना काव्ये नैपुण्यमेव न भवति, अपितु वाक्यदोषदृष्टिरपि न जायते । यो हि अलङ्कारशास्त्रं न जानाति केवलं व्याकरणशास्त्रमेव जानाति स कथं जानीयात्—"चिन्तारत्न मिव च्युतोऽसि" गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः "इति चानयोस्तुल्येऽपि उपमानोपमेययोः लिङ्गभेदे पूर्वं दृष्टं न परमिति । जघनकाञ्च्यादिपदकर्णावतंसादिपदयोः अविशिष्टेऽपि पौनरुक्त्ये पूर्वं दुष्टं परमदुष्टमिति । तस्मादेतदपि शास्त्रं व्याकरणादिवदवश्यमध्येतव्यश्रेण्यामन्तर्भवति ।"

## अलङ्कारशास्त्रमिति नाम्न औचित्यम्

अलङ्कारशास्त्रमिति नामास्य किमुचितमित्यत्र किञ्चिद्विचारयामः । अलङ्क्रियतेऽनेनेति करणव्युत्पत्तिनिष्पन्नो, यमकादिबोधको नायमलङ्कारशब्दः । किन्तु अलङ्कृतिरलङ्कार ति भावव्युत्पन्नो दोषापगमगुणालङ्कारसंवलनकृतसौन्दर्यपरः । तत्प्रतिपादकत्वादेवास्य अलङ्कारनाम्ना व्यपदेशः इत्युद्भावयामः । अत्र साधकं च वामनसन्दर्भमुदाहरामः । "काव्यं ग्राह्यमलङ्कारात् ।" "सौन्दर्यमलङ्कारः" । "अलङ्कृतिरलङ्कारः ।"

पं. का. सं. १-१-१-२-३

अथवा, शास्त्रेऽस्मिन्नुपमादिबोधकेन भावव्युत्पत्तिनिष्पन्नेन अलङ्कारशब्देन घटितमिदमलङ्कारशास्त्रम्। रसप्रधाने शब्दार्थयुगले, रीतिवृत्तिगुणालङ्कारेषु अलङ्काराणां प्राधान्येन "प्राधान्येन व्यपदेशा भवन्तीति न्यायात् अलङ्कारशास्त्रमिति नाम प्रथितमासीदिति केषाञ्चिन्मतम्।

काव्यात्मतया ध्वनेरङ्गीकारानन्तरं, परमरमणीयतया रसध्वनेः, रसात्मकं वाक्यं काव्यमिति वदता विश्वनाथकविराजेन रसस्य काव्ये प्राधान्यमुररीकृतम् ततोऽस्य शास्त्रस्य प्रागुक्तन्यायेन रसशास्त्रमितीदानीं यद्यपि व्यपदेशो युक्तः तथापि स एव प्राक्प्रचारमुपगतो व्यपदेशोऽद्यावधि प्रचलति।

## अलङ्कारशास्त्रवैशिष्ट्यम्

अलङ्कारशास्त्रं च चतुश्शास्त्रसारः पञ्चमं शास्त्रमिति वेदस्य षडङ्गेभ्यो विलक्षणं सप्तममङ्गमिति मुक्तकण्ठमुद्घोषितम् कविकुलशेखरेणख राजशेख रेण। श्रूयन्तां तस्य सुधामुचो वाचः। 'पञ्चमी साहित्यविद्येति यायावरीयः। सा हि चतसृणां विद्यानां निष्यन्दः' "उपकारकत्वादलङ्कारस्सप्तममङ्गम्। इति यायावरीयः" इति। इदं शास्त्रं, कालिदाससूक्तिभिर्ग्रथिततया कालिदासानन्तरं ग्रथितमिति वक्तुं शक्यते। तथापि प्राचा भामहेनेदं काव्यालङ्कारनाम्ना प्रथमं संदृब्धमिति वक्तुं सुवचम्। आचार्यदण्डिनेदं परां वृद्धिं नीतम्। भट्टोद्भटवामनादिभिरुपबृंहितमिदम्।

"ध्वनिनातिगभीरेण काव्यतत्त्वनिवेदिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥"

इति जगद्विख्यातिमुपगतेन, ध्वनिं काव्यात्मतया निर्दिशता सूरिवरेणानन्दवर्धनेनास्य महानुपकारः कृतः। लोचनेन ध्वन्यालोकं

भूषयन्नभिनवगुप्तः, ध्वनिविरोधी महिमभट्टः, विद्वत्कविकल्पभूजो भोजः, वाग्देवताऽपरावतारो मम्मटभट्टः,औचित्यसम्प्रदायप्रवर्तकः क्षेमेन्द्रः, अलङ्कारसर्वस्वकारो रुय्यकः, साहित्यदर्पणकर्ता विश्वनाथकविराजश्चेति विद्वत्प्रकाण्डैश्शास्त्रमिदं सम्यगुपबृंहितम् । अनवद्यविद्याकल्पद्रुमः, चतुरधिकशतप्रबन्धनिर्वाहकः, श्रीकण्ठमतप्रतिष्ठापनाचार्यः, महाव्रतयाजी, मीमांसाशास्त्रनिष्णातश्च श्रीमानप्पयदीक्षितः, अर्थालङ्कारविमर्शरूपां चित्रमीमांसां, पीयूषवर्षापरनामकजयदेवविरचितचन्द्रालोकव्याख्यारूपं कुवलयानन्दं अभिधावृत्तिमातृकां च शास्त्रीयसरण्या विरच्य शास्त्रान्तरवदस्यापि शास्त्रस्य द्रढिमानं सम्पादितवान् । भामहादारभ्य दीक्षितपर्यन्तं सुपरिष्कृते शास्त्रेऽस्मिन् सर्वशास्त्राभिज्ञस्य जगन्नाथस्य प्रवेशो नातिदुष्करो बभूव । अत्र विचारनिकषोपलोपनीतेषु तेषु तेषु साहित्यपदार्थेषु महान्मार्मिको विचारः कृतः । येन प्राचीनालङ्कारिकोपपादिताः पदार्था अभूवन्निष्प्रभाः निस्साराश्च। अत एव महामहोपाध्यायेन गिरिधरशर्मणा युक्तमुक्तम् "न्यायशास्त्रादिसरणिमनुसरन्ती येयं विवेचनापद्धतिः,श्रीमदभिनवगुप्तपादाचार्यैरलङ्कारशास्त्रेऽङ्कुरिता, वाग्देवतापरावतारैर्मम्मटभट्टैः कन्दलिता, श्रीमदप्पयदीक्षितप्रभृतिभिः पुष्पिता' सेयं पण्डितराजेति यथार्थबिरुदेन श्रीजगन्नाथत्रिशूलिना फलवत्तामापादितेति नास्त्यत्र संशयावसरः ।" इति ।

## अभियुक्तोक्तिः

" साहित्यापरपर्यायमलङ्कारशास्त्रमेवालङ्कारायमाणमशेषाणां शास्त्राणामिति सुविदितचरं तत्रभवतां भवताम् । एतदेव हि शास्त्रान्तरचमत्कारं निवेदयत्युपास्यमानम् । वापीकूपतटाकाद्यखिलजलाशयसम्पाद्यमर्थं जलनिधिरिवेदं सर्वेषां शास्त्राणां चमत्कारोद्बोधं समुपगमयति स्वं सेवमानानामित्येव साहित्याभिधानमलङ्कुरुते । हितेन सह वर्तमानत्वमेव साहित्यमितीदमपि तथाभूतम् । अलङ्कारशास्त्रमिति व्यपदेशबीजमपि तदेवैतस्य । साहित्यप्रधानमिति न केवलं व्यपदेशः, अपितु तथाभूतं

एतदेकमुपासाना: भवन्ति निश्चितनिश्शेषतन्त्रस्वतन्त्रा लब्धाभिलषितार्थाश्च" इत्यभियुक्तोक्तिः।

## अलङ्कारशास्त्रक्षेत्रे पण्डितराजस्य कृषिः

एवं सर्वशास्त्रप्रवीणेन पण्डितराजेन साहित्यापरनामन्यलङ्कारशास्त्रे भूयान् परिश्रमः कृतः। येन तदनन्तरकालिकास्सर्वेऽप्यालङ्कारिका निष्प्रभा निरहंकारा निरुद्धताश्च कृताः। अप्रतिमप्रतिभः पण्डितराजस्तु अलङ्कारशास्त्रमूर्धन्यं, रसगङ्गाधरनामानं निरुपमं निबन्धं निर्माय, अलङ्कारनिबन्धान्सर्वानपि गलितगर्वानकार्षीत्। अयमभिप्रायस्तेनैव ग्रन्थारम्भे रुचिरं निरूपितः—

"निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं
मयोन्नीतो लोके ललितरसगङ्गाधरमणिः।
हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवताम्
अलङ्कारान्सर्वानपि गलितगर्वान् रचयतु॥"

पं. का. सं. ८६–४

इतरालङ्कारनिबन्धैस्स्वनिबन्धस्य चरितार्थतामाशङ्क्य, न कदापि मम निबन्धो गतार्थो भविता, भविता चास्य महत्प्रयोजनमिति मनसि निधाय सदृष्टान्तमिदं हृद्यं पद्यमुपनिबद्धवान्—

परिष्कुर्वन्त्वर्थान् सहृदयधुरीणाः कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता।
तिमीन्द्रास्संक्षोभं विदधतु पयोधेः पुनरिमे
किमेतेनायासो भवति विफलो मन्दरगिरेः॥

पं. का. सं. ८६–५

रसगङ्गाधरे, इतरालङ्कारिकैरिव परेषामुदाहरणानि न स्वीकृतानि। किन्तु स्वकवितासङ्ग्रहात् भामिनीविलासादेव उदाहरणान्युपात्तानि। उपहासास्पदं कृताश्च परेभ्य उपात्तोदाहरणा अप्पयदीक्षितादयः। श्रूयतामिदं पद्यम्--

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ॥

पं. का. सं. ८९-६

## रसगङ्गाधरस्य विशिष्टता

गङ्गाधरो दिविषत्स्विव रसगङ्गाधरोऽयं अलङ्कारशास्त्रग्रन्थेष्वद्वितीयः। द्वितीयाननावधिरेवायमुपलभ्यते। पञ्चाननात्मकोऽयमित्युपतर्क्यते। पञ्चाननात्मकोऽयं कदाचिदुपलभ्येतेति दुराशामात्रमेतत्। अस्मिन् तादृशी मार्मिकालोचनपद्धतिरनुसृता, यया पूर्वनिबन्धा निष्प्रभा निस्साराश्च कृताः। पूर्वनिबन्धप्रतिपादितविषयान् पूर्वपक्षविधयावलम्ब्य मर्मस्पर्शिना विचारसंरम्भेण विषयास्सिद्धान्तिताः। नव्यन्यायानुगता प्रौढा च भाषा समुपयुक्ता। काव्यस्य जीवभूतानि यानि तत्त्वानि तानि प्राचीनैरेव परिनिष्ठां प्रापितानि। ततस्सिद्धेषु तेषु उत्तरोत्तरं मर्मस्पर्शी परिष्कार एव तस्य कृतित्वख्यातये अवाशिष्यत। अतः पण्डितराजो निबध्नन्निबन्धमिमं एतया सरण्या परां ख्यातिमाप।

"अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति प्राचीनैः काव्यलक्षणे प्रतिपादिते, तत्तिलशः खण्डयतेदं "रमणीयार्थप्रतिपादक-

श्शब्दः काव्य"मिति काव्यलक्षणं पण्डितराजेन निरूपितम् । "काव्यमुच्चैः पठ्यते" "काव्यादर्थोऽवगम्यते" "काव्यं श्रुतमर्थो न ज्ञातः" इत्यादिविश्वजनीनव्यवहारतः, शब्दविशेषस्यैव काव्यत्वमयं स्थापयति । मम्मटादिभिः प्रतिभाव्युत्पत्त्यभ्यासानां समुदितानां काव्यकारणत्वे प्रतिपादिते, प्रतिभाया एव काव्यकारणत्वं, व्युत्पत्त्यभ्यासयोश्च प्रतिभाकारणत्वं व्यवस्थापयति । त्रिषु काव्यप्रभेदेषु सर्वैरङ्गीकृतेषु चतुरः प्रभेदानयमङ्गीकरोति । व्यङ्ग्यार्थस्य प्राधान्याप्राधान्याभ्यां ध्वनिकाव्यं गुणीभूतव्यङ्ग्यकाव्यमिति काव्यद्वयमङ्गीकृतं प्राचीनैः । तथा वाच्यार्थस्य प्राधान्याप्राधान्याभ्यां अर्थचित्रशब्दचित्रकाव्ययोरपि भेदोऽनेन सम्यगूरीकृतः । रसविषये एकादश मतान्यनेन सम्यङ्निरूपितानि । रसगङ्गाधरमनधीतवतां रसपदार्थविचारो न सम्यग्गोचरीभवतीति, अभियुक्तोक्तिर्न सत्यापेता । भक्तेर्दशमरसत्वमाङ्क्य सयुक्तिकं प्रतिषिद्धम् । वीरस्य चातुर्विध्ये प्राचीनैरङ्गीकृते अष्टमूर्तित्वं जगन्नाथेन सयुक्तिकमुपपादितम् ।

"ओजःप्रसादश्लेषसमाधिमाधुर्यसौकुमार्यौदारतार्थव्यक्तिकान्तयो बन्धगुणाः" "त एवार्थगुणाः" इति विंशतिगुणेषु वामनेन निरूपितेषु, तेषां विशदं विवेचनं सोदाहरणं कृत्वा, माधुर्यौजःप्रसादाख्येषु त्रिषु गुणेषु तानन्तर्भावयति सोपपत्तिकम् । तत्तद्गुणानुगुणरचनायां वर्जनीयवर्णानां सूक्ष्मो रोचकश्च विचारः कृतः । भावध्वनिलक्षणं सम्यग्विचार्य बहोः कालात् भावध्वनेः पृथक्तयावस्थितानां भावोदयभावशान्तिभावसन्धिभावशबलतानां विद्यमानतया चर्व्यमाणेष्विव उत्पत्त्यवच्छिन्नत्व–विनश्यदवस्थत्व–सन्धीयमानत्व—परस्परसमानाधिकरणत्वैः प्रकारैश्चर्व्यमाणेष्वभावेष्विव प्राधान्यस्यौचित्यात् चमत्कृतेस्तत्रैव विश्रान्तेः भावध्वनावेवान्तर्भावं समर्थयति । अभिधाप्रभृतीस्तिस्रोवृत्तीर्महता प्रबन्धेन विमृशति ।

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ।"

इति मम्मटादिभिर्व्यञ्जनालक्षणे प्रतिपादिते, तदनादृत्य—

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा ॥

इति नूत्नं लक्षणं विधाय स्वविशिष्टतां स्थापयति । किं बहुना । उपमाद्यलङ्कारेषु प्राचीनानां लक्षणानि खण्डयित्वा स्वोपज्ञानि निर्माय सर्वापेक्षया अपूर्वं विमर्शं कृत्वा, असममुदाहरणं चेत्यलङ्कारद्वयं निर्माय सयुक्तिकं आत्मनो विमर्शनाशक्ति निरूपयति । खण्डनविषयीकृतेषु पण्डितेषु अनवद्यविद्याकल्पद्रुमः श्रीमानप्पयदीक्षित एव प्रथमः प्रतिस्पर्धीव दरीदृश्यते । यतोऽनेन चित्रमीमांसाखण्डनं नाम ग्रन्थ एव व्यरचि दीक्षितदूषणपरः । तदितरे आलङ्कारिका अलङ्कारसर्वस्वकारादयोऽपि विमर्शविषयीकृताः तथापि तेषु अप्पयदीक्षित इवास्य रोषरूक्षा दृष्टिर्न निपतति ।

जगन्नाथस्य, कवितायामिव स्वविमर्शनायामपि अस्ति महानात्माभिमानः । अत एव स्वकवितामधिकृत्य सावलेपमेवमभिधत्ते ।

आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात् पयोधेः
यावन्तस्सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ॥

पं. का. सं. ७७–२६

पद्यमिदं भगवद्रामानुजस्यगुरोर्यामुनाचार्यस्य प्रतिज्ञामनुकरोतीव । सा चेयम्—

आशैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात्
आरक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।

आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कचन्द्रावतंसात्
मीमांसाशास्त्रयुग्मश्रममृदितमना मृग्यतां मादृशोऽन्यः ।।

कविराजः पण्डितराजश्च जगन्नाथः निरुपमः कविर्निरुपमो विमर्शकश्च। अत एव सहृदयसमाजे अभ्रङ्कषां कीर्ति, अप्रतिमां प्रतिष्ठां च लब्धवानयं लब्धवर्णः। अत एव युक्तमुक्तमभियुक्तशिरोमणिभिरस्मद्गुरुचरणैः——

"विमर्शः कविता चेति द्वन्द्वं यदि सुसङ्गतम्। प्रसुवीत रसं हृद्यंसम्मोदाय सचेतसाम्" इति।



# 'सङ्गीतमथ साहित्यम्'

सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम् ।

एकमापातमधुरम् अन्यदालोचनामृतम् ॥

श्रुते सङ्गीतपदे साहित्यपदं स्मृतिपथमागच्छति । नागरिकता-संस्कृत्योरिव सङ्गीतसाहित्ययोः पृथक्करणानर्हस्सम्बन्धो विलसति । न नहि विदितं विदुषां यत् सङ्गीतरहितं साहित्यं वा, साहित्यरहितं सङ्गीतं वा, न प्रकाशेते इति ।

"सङ्गीतसाहित्यकलाविहीन, स्साक्षात्पशुः पुच्छविषाणहीनः' इति सहृदयानां भावना सरसा समीचीना समुचिता च । सङ्गीतं नाम नृत्तगीतवाद्यानां समुचितं सम्मेलनम् । नाट्यनृत्यनृत्तानामीषद्भेदो त्रिलोक्यते । "नट अवस्पन्दने" इत्यस्माद्धातोर्ण्यत्प्रत्यये नाट्यमिति रूपम । नटेः किञ्चित्स्पन्दनार्थकत्वात्सात्विकबाहुल्यम् । अतस्तत्कारिषु नटव्यपदेशः । अवस्थानुकृतिर्नाट्यमिति तल्लक्षणम् । नाट्यं च रसाश्रयम् । रसाश्रयान्नाट्याद्भावाश्रयं नृत्यमन्यदेव । नृतेगात्रविक्षेपार्थकत्वेनाङ्गिकबाहुल्यम् । अतस्तत्कारिषु नर्तकव्यपदेशः । नृत्यादपि च नृत्तं भिन्नम् । तदुक्तम्—'नृत्तंताललयाश्रय" मिति । मधुरं नृत्यं नुत्तं च लास्यमिति उद्धतं नृत्यं नृत्तं च ताण्डवमिति चाभिधीयेते । लास्यताण्डवे उभे अपि शोभाधायकतया नाटकाद्युपकारके भवतः इत्यलमनेनाप्रस्तुतेन भेदोपवर्णनेन । "पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी" इति वचनानुसारमिदं सङ्गीतं पशुमारभ्य पशुपतिपर्यन्तं सर्वेषां परमानन्दं जनयति । शिला अपि द्रावयति । विषमुद्गिरत्सु विषधरेष्वपि स्वप्रभावं दर्शयति । किं बहुना! पशवोऽपि स्वाभाविकं मौर्ख्यं विहाय, सङ्गीतगतं सहजं माधुर्य-

मनुभविष्यन्तीति कोविदा विदन्त्येव । अत एव, सङ्गीतं नाम ललितकलासु रसाभिज्ञैः स्पृहणीया श्लाघनीया च मुख्या कला ।

साहित्यपदस्य व्युत्पत्तिरभिज्ञैर्द्विविधा कथ्यते । सहितौ शब्दार्थौ। तावेव साहित्यम्, तयोर्भावो वा साहित्यम् । हितो नाम रसः तेन सह वर्तेते इति सहितौ । सहितौ=रसयुक्तौ शब्दार्थौ । तावेव, तयोर्भावो वा साहित्यम् । गुणालङ्कारपरिष्कृतौ दोषरहितौ सरसौ शब्दार्थौ काव्यनाटकादिपदवाच्यौ साहित्यमिति व्यवह्रियेते । सुकुमारे साहित्ये कृतपरिश्रमो जनस्सहृदय इत्यभिधीयते । साहित्यं मानवस्य कीर्तिं, द्रविणं, व्यवहारज्ञानं, अमङ्गलनिवृत्तिं, विगलितवेद्यान्तरमानन्दं च जनयति । तदुक्तं काव्यप्रकाशे—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे ।। इति ।

अपि चेदं, पुरुषार्थचतुष्टयं सकलासु कलासु कौशलं च सम्पादयति । तदुक्तं भामहालङ्कारे—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासुच ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ।।

भामहः १–१

अन्यच्चेदं विज्ञानं, विवेकं विनोदं च वर्धयति । उत्तमपुरुषाणामुदारचरितान्याश्राव्य घातुकमपि दयालुमारचयति ।

एवंविधे सङ्गीतसाहित्ये उभे अपि सरस्वत्यास्सहजभूषणं स्तनद्वयमिति ब्रुवते हि सहृदयाः । प्रथममास्वादयितुरास्वादनानुपदमेव माधुर्यमभिव्यञ्जयति । चरमं च गच्छता कालेन, आलोचनायां निमग्नस्यास्वादयितुर्निरुपममानन्दं जनयति । जिजीविषया मातुस्सरस्वत्या उत्सङ्गे क्रीडतस्सहृदयस्य स्तनद्वयमिदं क्रमिकाभिवृद्धिं कल्पयति ।

भूषयन्नभिनवगुप्तः, ध्वनिविरोधी महिमभट्टः, विद्वत्कविकल्पभूजो भोजः, वाग्देवताऽपरावतारो मम्मटभट्टः,औचित्यसम्प्रदायप्रवर्तकः क्षेमेन्द्रः, अलङ्कारसर्वस्वकारो रुय्यकः, साहित्यदर्पणकर्ता विश्वनाथकविराजश्चेति विद्वत्प्रकाण्डैश्शास्त्रमिदं सम्यगुपबृंहितम् । अनवद्यविद्याकल्पद्रुमः, चतुरधिकशतप्रबन्धनिर्वाहकः, श्रीकण्ठमतप्रतिष्ठापनाचार्यः, महाव्रतयाजी, मीमांसाशास्त्रनिष्णातश्च श्रीमानप्पयदीक्षितः, अर्थालङ्कारविमर्शरूपां चित्रमीमांसां, पीयूषवर्षापरनामकजयदेवविरचितचन्द्रालोकव्याख्यारूपं कुवलयानन्दं अभिधावृत्तिमातृकां च शास्त्रीयसरण्या विरच्य शास्त्रान्तरवदस्यापि शास्त्रस्य द्रढिमानं सम्पादितवान् । भामहादारभ्य दीक्षितपर्यन्तं सुपरिष्कृते शास्त्रेऽस्मिन् सर्वशास्त्राभिज्ञस्य जगन्नाथस्य प्रवेशो नातिदुष्करो बभूव । अत्र विचारनिकषोपलोपनीतेषु तेषु तेषु साहित्यपदार्थेषु महान्मार्मिको विचारः कृतः । येन प्राचीनालङ्कारिकोपपादिताः पदार्था अभूवन्निष्प्रभाः निस्साराश्च । अत एव महामहोपाध्यायेन गिरिधरशर्मणा युक्तमुक्तम् "न्यायशास्त्रादिसरणिमनुसरन्ती येयं विवेचनापद्धतिः,श्रीमदभिनवगुप्तपादाचार्यैरलङ्कारशास्त्रेऽङ्कुरिता, वाग्देवतापरावतारैर्मम्मटभट्टैः कन्दलिता, श्रीमदप्पयदीक्षितप्रभृतिभिः पुष्पिता' सेयं पण्डितराजेति यथार्थबिरुदेन श्रीजगन्नाथत्रिशूलिना फलवत्तामापादितेति नास्त्यत्र संशयावसरः ।" इति ।

## अभियुक्तोक्तिः

" साहित्यापरपर्यायमलङ्कारशास्त्रमेवालङ्कारायमाणमशेषाणां शास्त्राणामिति सुविदितचरं तत्रभवतां भवताम् । एतदेव हि शास्त्रान्तरचमत्कारं निवेदयत्युपास्यमानम् । वापीकूपतटाकाद्यखिलजलाशयसम्पाद्यमर्थं जलनिधिरिवेदं सर्वेषां शास्त्राणां चमत्कारोद्बोधं समुपगमयति स्वं सेवमानानामित्येव साहित्याभिधानमलङ्कुरुते । हितेन सह वर्तमानत्वमेव साहित्यमितीदमपि तथाभूतम् । अलङ्कारशास्त्रमिति व्यपदेशबीजमपि तदेवैतस्य । साहित्यप्रधानमिति न केवलं व्यपदेशः, अपितु तथाभूतं

एतदेकमुपासानाः भवन्ति निश्चितनिश्शेषतन्त्रस्वतन्त्रा लब्धाभिलषितार्थाश्च" इत्यभियुक्तोक्तिः ।

## अलङ्कारशास्त्रक्षेत्रे पण्डितराजस्य कृषिः

एवं सर्वशास्त्रप्रवीणेन पण्डितराजेन साहित्यापरनामन्यलङ्कारशास्त्रे भूयान् परिश्रमः कृतः । येन तदनन्तरकालिकास्सर्वेऽप्यालङ्कारिका निष्प्रभा निरहंकारा निरुद्धताश्च कृताः । अप्रतिमप्रतिभः पण्डितराजस्तु अलङ्कारशास्त्रमूर्धन्यं, रसगङ्गाधरनामानं निरुपमं निबन्धं निर्माय, अलङ्कारनिबन्धान्सर्वानपि गलितगर्वानकार्षीत् । अयमभिप्रायस्तेनैव ग्रन्थारम्भे रुचिरं निरूपितः—

"निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं
मयोन्नीतो लोके ललितरसगङ्गाधरमणिः ।
हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवताम्
अलङ्कारान्सर्वानपि गलितगर्वान् रचयतु ॥"

पं. का. सं. ८९–४

इतरालङ्कारनिबन्धैस्स्वनिबन्धस्य चरितार्थतामाशङ्क्य, न कदापि मम निबन्धो गतार्थो भविता, भविता चास्य महत्प्रयोजनमिति मनसि निधाय सदृष्टान्तमिदं हृद्यं पद्यमुपनिबद्धवान् —

परिष्कुर्वन्त्वर्थान् सहृदयधुरीणाः कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता ।
तिमीन्द्रास्संक्षोभं विदधतु पयोधेः पुनरिमे
किमेतेनायासो भवति विफलो मन्दरगिरेः ॥

पं. का. सं. ८९–५

रसगङ्गाधरे, इतरालङ्कारिकैरिव परेषामुदाहरणानि न स्वीकृतानि। किन्तु स्वकवितासङ्ग्रहात् भामिनीविलासादेव उदाहरणान्युपात्तानि। उपहासास्पदं कृताश्च परेभ्य उपात्तोदाहरणा अप्पयदीक्षितादयः। श्रूयतामिदं पद्यम्--

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण॥

पं. का. सं. ८९-६

## रसगङ्गाधरस्य विशिष्टता

गङ्गाधरो दिविषत्स्वव रसगङ्गाधरोऽयं अलङ्कारशास्त्रग्रन्थेष्वद्वितीयः। द्वितीयाननावधिरेवायमुपलभ्यते। पञ्चाननात्मकोऽयमित्युपतर्क्यते। पञ्चाननात्मकोऽयं कदाचिदुपलभ्येतेति दुराशामात्रमेतत्। अस्मिन् तादृशी मार्मिकालोचनपद्धतिरनुसृता, यया पूर्वनिबन्धा निष्प्रभा निस्साराश्च कृताः। पूर्वनिबन्धप्रतिपादितविषयान् पूर्वपक्षविधयावलम्ब्य मर्मस्पर्शिना विचारसंरम्भेण विषयास्सिद्धान्तिताः। नव्यन्यायानुगता प्रौढा च भाषा समुपयुक्ता। काव्यस्य जीवभूतानि यानि तत्त्वानि तानि प्राचीनैरेव परिनिष्ठां प्रापितानि। ततस्सिद्धेषु तेषु उत्तरोत्तरं मर्मस्पर्शी परिष्कार एव तस्य कृतित्वख्यातये अवाशिष्यत। अतः पण्डितराजो निबध्नन्निबन्धमिमं एतया सरण्या परां ख्यातिमाप।

"अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति प्राचीनैः काव्यलक्षणे प्रतिपादिते, तत्तिलशः खण्डयतेदं "रमणीयार्थप्रतिपादक-

शब्दः काव्य"मिति काव्यलक्षणं पण्डितराजेन निरूपितम्। "काव्यमुच्चैः पठ्यते" "काव्यादर्थोऽवगम्यते" "काव्यं श्रुतमर्थो न ज्ञातः" इत्यादिविश्वजनीनव्यवहारतः, शब्दविशेषस्यैव काव्यत्वमयं स्थापयति। मम्मटादिभिः प्रतिभाव्युत्पत्त्यभ्यासानां समुदितानां काव्यकारणत्वे प्रतिपादिते, प्रतिभाया एव काव्यकारणत्वं, व्युत्पत्त्यभ्यासयोश्च प्रतिभाकारणत्वं व्यवस्थापयति। त्रिषु काव्यप्रभेदेषु सर्वैरङ्गीकृतेषु चतुरः प्रभेदानयमङ्गीकरोति। व्यङ्ग्यार्थस्य प्राधान्याप्राधान्याभ्यां ध्वनिकाव्यं गुणीभूतव्यङ्ग्यकाव्यमिति काव्यद्वयमङ्गीकृतं प्राचीनैः। तथा वाच्यार्थस्य प्राधान्याप्राधान्याभ्यां अर्थचित्रशब्दचित्रकाव्ययोरपि भेदोऽनेन सम्यगूरीकृतः। रसविषये एकादश मतान्यनेन सम्यङ्निरूपितानि। रसगङ्गाधरमनधीतवतां रसपदार्थविचारो न सम्यग्गोचरीभवतीति, अभियुक्तोक्तिर्न सत्यापेता। भक्तेर्दशमरसत्वमाङ्क्य सयुक्तिकं प्रतिषिद्धम्। वीरस्य चातुर्विध्ये प्राचीनैरङ्गीकृते अष्टमूर्तित्वं जगन्नाथेन सयुक्तिकमुपपादितम्।

"ओजःप्रसादश्लेषसमाधिमाधुर्यसौकुमार्यौदारतार्थव्यक्तिकान्तयो बन्धगुणाः" "त एवार्थगुणाः" इति विंशतिगुणेषु वामनेन निरूपितेषु, तेषां विशदं विवेचनं सोदाहरणं कृत्वा, माधुर्यौजःप्रसादाख्येषु त्रिषु गुणेषु तानन्तर्भावयति सोपपत्तिकम्। तत्तद्गुणानुगुणरचनायां वर्जनीयवर्णानां सूक्ष्मो रोचकश्च विचारः कृतः। भावध्वनिलक्षणं सम्यग्विचार्य बहोः कालात् भावध्वनेः पृथक्तयावस्थितानां भावोदयभावशान्तिभावसन्धिभावशबलतानां विद्यमानतया चर्व्यमाणेष्विव उत्पत्त्यवच्छिन्नत्व—विनश्यदवस्थत्व—सन्धीयमानत्व—परस्परसमानाधिकरणत्वैः प्रकारैश्चर्व्यमाणेष्वभावेष्विव प्राधान्यस्यौचित्यात् चमत्कृतेस्तत्रैवविश्रान्तेः भावध्वनावेवान्तर्भावं समर्थयति। अभिधाप्रभृतीस्तिस्रोवृत्तीर्महता प्रबन्धेन विमृशति।

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।"

इति मम्मटादिभिर्व्यञ्जनालक्षणे प्रतिपादिते, तदनादृत्य—

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा ।।

इति नूत्नं लक्षणं विधाय स्वविशिष्टतां स्थापयति । किं बहुना । उपमाद्यलङ्कारेषु प्राचीनानां लक्षणानि खण्डयित्वा स्वोपज्ञानि निर्माय सर्वापेक्षया अपूर्वं विमर्शं कृत्वा, असममुदाहरणं चेत्यलङ्कारद्वयं निर्माय सयुक्तिकं आत्मनो विमर्शनाशक्तिं निरूपयति । खण्डनविषयीकृतेषु पण्डितेषु अनवद्यविद्याकल्पद्रुमः श्रीमानप्पयदीक्षित एव प्रथमः प्रतिस्पर्धीव दरीदृश्यते । यतोऽनेन चित्रमीमांसाखण्डनं नाम ग्रन्थ एव व्यरचि दीक्षितदूषणपरः । तदितरे आलङ्कारिका अलङ्कारसर्वस्वकारादयोऽपि विमर्शविषयीकृताः तथापि तेषु अप्पयदीक्षित इवास्य रोषरूक्षा दृष्टिर्न निपतति ।

जगन्नाथस्य, कवितायामिव स्वविमर्शनायामपि अस्ति महानात्माभिमानः । अत एव स्वकवितामधिकृत्य सावलेपमेवमभिधत्ते ।

आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात् पयोधेः
यावन्तस्सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ।।

पं. का. सं. ७७–२६

पद्यमिदं भगवद्रामानुजस्यगुरोर्यामुनाचार्यस्य प्रतिज्ञामनुकरोतीव । सा चेयम्—

आशैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात्
आरक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।

आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कचन्द्रावतंसात्
मीमांसाशास्त्रयुग्मश्रममृदितमना मृग्यतां मादृशोऽन्यः ॥

कविराजः पण्डितराजश्च जगन्नाथः निरुपमः कविर्निरुपमो विमर्शकश्च । अत एव सहृदयसमाजे अभ्रङ्कषां कीर्ति, अप्रतिमां प्रतिष्ठां च लब्धवानयं लब्धवर्णः । अत एव युक्तमुक्तमभियुक्तशिरोमणिभिरस्मद्गुरुचरणैः—

"विमर्शः कविता चेति द्वन्द्वं यदि सुसङ्गतम् । प्रसुवीत रसं हृद्यंसम्मोदाय सचेतसाम्" इति ।



# 'सङ्गीतमथ साहित्यम्'

सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम् ।

एकमापातमधुरम् अन्यदालोचनामृतम् ।।

श्रुते सङ्गीतपदे साहित्यपदं स्मृतिपथमागच्छति । नागरिकता-संस्कृत्योरिव सङ्गीतसाहित्ययोः पृथक्करणानर्हसम्बन्धो विलसति । न नहि विदितं विदुषां यत् सङ्गीतरहितं साहित्यं वा, साहित्यरहितं सङ्गीतं वा, न प्रकाशेते इति ।

"सङ्गीतसाहित्यकलाविहीन, स्साक्षात्पशुः पुच्छविषाणहीनः" इति सहृदयानां भावना सरसा समीचीना समुचिता च । सङ्गीतं नाम नृत्तगीतवाद्यानां समुचितं सम्मेलनम् । नाट्यनृत्यनृत्तानामीषद्भेदो विलोक्यते । "नट अवस्पन्दने" इत्यस्माद्धातोर्ण्यत्प्रत्यये नाट्यमिति रूपम् । नटेः किञ्चित्स्पन्दनार्थकत्वात्सात्विकबाहुल्यम् । अतस्तत्कारिषु नटव्यपदेशः । अवस्थानुकृतिर्नाट्यमिति तल्लक्षणम् । नाट्यं च रसाश्रयम् । रसाश्रयान्नाट्याद्भावाश्रयं नृत्यमन्यदेव । नृतेगात्रविक्षेपार्थकत्वेनाङ्गिक-बाहुल्यम् । अतस्तत्कारिषु नर्तकव्यपदेशः । नृत्यादपि च नृत्तं भिन्नम् । तदुक्तम्—'नृत्तं ताललयाश्रय" मिति । मधुरं नृत्यं नृत्तं च लास्यमिति उद्धतं नृत्यं नृत्तं च ताण्डवमिति चाभिधीयेते । लास्यताण्डवे उभे अपि शोभाधायकतया नाटकाद्युपकारके भवतः इत्यलमनेनाप्रस्तुतेन भेदोप-वर्णनेन । "पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी" इति वचनानुसारमिदं सङ्गीतं पशुमारभ्य पशुपतिपर्यन्तं सर्वेषां परमानन्दं जनयति । शिला अपि द्रावयति । विषमुद्गिरत्सु विषधरेष्वपि स्वप्रभावं दर्शयति । किं बहुना! पशवोऽपि स्वाभाविकं मौर्ख्यं विहाय, सङ्गीतगतं सहजं माधुर्य-

मनुभविष्यन्तीति कोविदा विदन्त्येव । अत एव, सङ्गीतं नाम ललितकलासु रसाभिज्ञैः स्पृहणीया श्लाघनीया च मुख्या कला ।

साहित्यपदस्य व्युत्पत्तिरभिज्ञैर्द्विविधा कथ्यते । सहितौ शब्दार्थौ। तावेव साहित्यम्, तयोर्भावो वा साहित्यम् । हितो नाम रसः तेन सह वर्तेते इति सहितौ । सहितौ=रसयुक्तौ शब्दार्थौ । तावेव, तयोर्भावो वा साहित्यम् । गुणालङ्कारपरिष्कृतौ दोषरहितौ सरसौ शब्दार्थौ काव्यनाटकादिपदवाच्यौ साहित्यमिति व्यवह्रियेते । सुकुमारे साहित्ये कृतपरिश्रमो जनस्सहृदय इत्यभिधीयते । साहित्यं मानवस्य कीर्तिं, द्रविणं, व्यवहारज्ञानं, अमङ्गलनिवृत्तिं, विगलितवेद्यान्तरमानन्दं च जनयति । तदुक्तं काव्यप्रकाशे—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।

सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे ॥ इति ।

अपि चेदं, पुरुषार्थचतुष्टयं सकलासु कलासु कौशलं च सम्पादयति । तदुक्तं भामहालङ्कारे—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासुच ।

करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥

भामहः १–१

अन्यच्चेदं विज्ञानं, विवेकं विनोदं च वर्धयति । उत्तमपुरुषाणामुदारचरितान्याश्राव्य घातुकमपि दयालुमारचयति ।

एवंविधे सङ्गीतसाहित्ये उभे अपि सरस्वत्यास्सहजभूषणं स्तनद्वयमिति ब्रुवते हि सहृदयाः । प्रथममास्वादयितुरास्वादनानुपदमेव माधुर्यमभिव्यञ्जयति । चरमं च गच्छता कालेन, आलोचनायां निमग्नस्यास्वादयितुर्निरुपममानन्दं जनयति । जिजीविषया मातुस्सरस्वत्या उत्सङ्गे क्रीडतस्सहृदयस्य स्तनद्वयमिदं क्रमिकाभिवृद्धिं कल्पयति ।

ऐश्वर्य-गर्वराहित्ययोरिव, सामर्थ्य-परोपकारयोरिव साम्राज्य-दाक्षिण्ययोरिव, औदार्य-प्रियवादयोरिव च, साहित्य-पाण्डित्ययोस्सामानाधिकरण्यं सम्भवेद्विरलतया। अन्ये च पण्डिता अन्ये च साहित्यविदः। पण्डितेषु साहित्यं मृग्यं भवति। साहितीवित्सु च पाण्डित्यं शून्यं भवति। पाण्डित्यं नाम शास्त्रीयविज्ञानम्। साहित्यं नाम स्वप्रतिभासम्पादितस्सहज आत्मसंस्कारः। आत्मभेदेन संस्कृतिभेदस्संजायते। धारयन्ति हि सर्वेऽपि समानं शास्त्रीयं विज्ञ नम्। अत एव वेदान्तिनामग्रगण्यो भूतपूर्वराष्ट्रपतिश्च सर् राधाकृष्णपण्डित एवम् अभिहितवान्। 'एकेन कृतस्य प्रयोगस्यापरोऽनुकुर्यात्। एकेन प्रणीतं काव्यमपरो न प्रणेयात्। यद्यमेरिकां "कोलम्बस्" नाभिजानीयादन्यस्तामभिजानीयात्। कविकुलगुरुः कलिदासो यद्यस्माकं देशे नोत्पद्येत, रसनिधानस्य, अभिज्ञानशाकुन्तलनाम्नो नाटकस्य पठनेनोत्पन्न आनन्दो नास्माभिरितरैश्चानुभूयेत। षेक्स्पियर् महाकविर्यदि नोत्पद्येत, तर्हि हाम्लेट्सदृशानां रुचिराणां रूपकाणां पठनभाग्यं नास्माकं सिध्येत्।" इति।

साहित्यं सामाजिकव्यवस्थायाः प्रतिबिम्बः। गुणानामुपादानं दोषाणां परिहारश्च साहित्यस्य मुख्यं फलम्। हंसानां क्षीरनीरपृथक्करणसामर्थ्यमिव, सहजं हि सहृदयानां गुणदोषविवेचनसामर्थ्यम्। तादृशसाहित्यस्य काव्यानि कुलभवननि। निजमृदुमधुरमनोहरललितकविताविलासैः काव्यानि निर्मितवतां कवीनां जीवितानि धन्यानि गण्यानि। सा कविता वन्ध्या यस्यां वदान्यो वक्ता च मुकुन्दो न वर्ण्यत इत्यमन्यत कश्चित् कविवतंसः। श्रूयतां तावत्।

"कविता भुवि तावदेव वन्ध्या भविता यावदयं न वर्ण्यते हि
तरसा सुरसालवद्वदान्यस्सरसालापवशंवदो मुकुन्दः।"

श्री. वि. चं–१–३

विलासकथासु यदि कुतूहलं स्यात्, यद्यस्ति हरिनामस्मर्तुमिच्छा, सुधामधुरिमाधरीकरणचतुरां स्वकवितां श्रोतुं सचेतसः

कामयतेऽन्यः कविवसंसः। श्रूयतामिदं पीयूषवर्षापरनामधेयस्य जयदेवस्य हृद्यं पद्यम्।

"यदि हरिस्मरणे सरसं मनो यदि विलासकथासु कुतूहलम्।
कमलकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम्॥

कविता नाम गणयतिप्रासानुसारेण च्छन्दसां निबन्धनमेवेति केचिन्मन्यन्ते। प्राग्जन्मकृतसुकृतविशेषपरिपाकलब्धप्रतिभाविशेषादेव कविता मानवमनुसरतीति न जानन्ति। 'प्रतिभायाश्च व्युत्पत्त्यभ्यासौ कारण" मित्याचष्टे पण्डितराजः कविराजश्च जगन्नाथः। सकलासु कलासु, सर्वेषु शास्त्रेषु, अनवद्यासु विद्यासु भूयसा यत्नेन परिश्रमो व्युत्पत्तिरिति वदन्ति साहित्यकोविदाः। मृद्वीकामधुमाधुर्यधुर्याणि काव्यानि ये रचयामासुस्तेषां शुश्रूषया काव्यगतगुणदोषविमर्शनपुरस्सरं प्रवृत्तिरभ्यास इति काव्यविदां समुदाचारः। एतत्त्रितयं समुदितं कारणमिति वाग्देव्यपरावतारो मम्मटभट्ट आशेते। हितप्राप्तिरहितनिवृत्तिश्च जीवात्मनो मुख्यकार्ये, याभ्यां मानवस्सर्वदा यतते। एते, शब्दप्रधानाभ्यां वेदशास्त्राभ्यां प्रभुसम्मिततया समुपदिश्येते, अर्थप्रधानाभ्यामितिहासपुराणाभ्यां सुहृत्सम्मिततया समुपदिश्येते। त्यागशीलस्स्वार्थरहितो हितैषी च रामचन्द्रः, स्वार्थपरं परोपतापिनं चारित्रहीनं च दशाननं निर्जित्य विजयलक्ष्म्या सह गृहलक्ष्मीं सीतामग्रहीदिति श्रीमद्रामायणे सुहृत्सम्मिततया बोधित इत्यवगत एवायं विषयस्सर्वेषाम्। इतिहासपुराणयोरुपपादितमर्थमवगन्तुमशक्तानां सुकुमारमतीनां राजकुमाराणां कान्तासम्मिततया हितोपदेशं विधातुं काव्यानि प्रणीतानि। दृश्यन्ते ह्येतानि काव्यानि, गद्यमयानि, पद्यमयानि, उभयमयानीति त्रिविधानि।

हृद्यं पद्यं यदि द्राक्षयोपमीयते, तर्ह्यनवद्यं गद्यं मधुना तुल्यं वदितुमर्हति। अतो गद्यपद्यात्मकाश्चम्पूप्रबन्धा मधुनि निक्षिप्तानि

द्राक्षाफलानीत्यवोचत् विश्वगुणादर्शकर्ता वेङ्कटाध्वरिः, यस्यायं मृदुमधुरो मनोहरश्च श्लोकः ।

'पद्यं यद्यपि विद्यते बहु सतां हृद्यं विगद्यं न तत्
गद्यं च प्रतिपद्यते न विजहत्पद्यं बुधास्वाद्यताम् ।
आधत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयं
सङ्गः कस्य हि न स्वदेत मनसे माध्वीकमृद्वीकयोः ॥

विश्व चं. गु. ४ श्लोकः

विद्वत्कविकल्पभूजो भोजो गद्यपद्ये वाद्यविशेषाकलितया गीत्या तुलितवान् ।

एतानि काव्यानि दृश्यानि श्रव्याणि चेति द्विविधानि । विज्ञानसम्पन्नैरवगन्तुं योग्यानि काव्यानि श्रव्यकाव्यानि । तानि रघुवंशादीनि । रङ्गस्थले कुशलैः कुशीलवैरभिनेयानि मनोहराणि काव्यानि दृश्यकाव्यानि । एतानि सुकुमारमतिभी राजकुमारैरप्यवगन्तुं योग्यानि, अभिज्ञानशाकुन्तलादीनि । एतान्यनुकार्यरूपसमारोपाद्रूपकाणीत्यप्यभिधीयन्ते । रूपकाणि च दशधा विलसन्ति । तदुक्तं प्रतापरुद्रीये—

'नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश ॥'' इति

सन्त्यष्टादशोपरूपकाण्यपि । 'वस्तु-नेतृ-रसास्तेषां भेदकाः ।

द. रू. १-८

मधुरायां संस्कृतभाषायां काव्यप्रणयने सिद्धहस्तः कविर्भगवान् वाल्मीकिः । अयं कविश्श्रीमद्रामायणं नामादिकाव्यं प्रणीय महतीं कीर्तिं प्रतिष्ठां च लेभे ।

"कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥"

इति सहृदयानां प्रशंसायाः प्रात्रमभूत् ।

"मधुमयभणितीनां मार्गदर्शी महर्षिः ।"

—रामायण चंपूः

इति राजर्षिर्भोजोऽप्यश्लाघत महर्षि वाल्मीकिम् ।

अनन्तरं गणनीयः कविर्भगवान् व्यासः, यः खलु महाभारतं, अष्टादशपुराणानि च प्रणिनाय । अत एवामुं, कश्चित् सहृदय एवमभ्यनन्दत् ।—

"अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनश्शम्भुर्भगवान् बादरायणः ॥"

प्रतिभावन्ताविमावुभावपि कवी पुराणयुगसम्बन्धिनौ । अनयोः कविवरयोः पदपद्मानुसरणनिपुणः, अप्रतिमप्रतिभः सर्वशास्त्र-विशारदः, सकलकलाकलापालोचनकठोरमतिर्मतिमान् महाकविः कालिदासः काव्यसौधस्य नप्रकम्पनीयां भूमिकामारचयामास । कविकुल-गुरुरिति, कविसार्वभौम इति च विद्वत्कविलोकप्रशंसामप्यविन्दत । पूज्य-चरणा अस्माकं गुरुचरणाः कालिदासमेव मस्तुवंत स्वकाव्ये सुषुप्तिवृत्ते ।

"ललितामेव वितन्वन् सृष्टिं स्रष्टारमप्यतिशयानः ।
औचित्या मूर्तिर्मे भजनीयः कालिदासोऽत्र ॥"

अयं रघुवंशकुमारसम्भवमेघदूताख्यानि कमनीयानि त्रीणि श्रव्यकाव्यानि, मालविकाग्निमित्र-विक्रमोर्वशीय-अभिज्ञानशाकुन्तला-ख्यानि मनोहराणि त्रीणि रूपकाणि च प्रणिनाय ।

त्रिविधं तावत् काव्यम्, ध्वनि, गुणीभूतव्यङ्ग्य, चित्रभेदात्। यत्र वाच्यातिशायि व्यङ्ग्यं स ध्वनिः। यत्र व्यङ्ग्यं वाच्यानतिशायि तद् गुणीभूतव्यङ्ग्यम्। यदव्यङ्ग्यमपि चारु तच्चित्रम्।

महाकवेः कालिदासस्य काव्यानि प्रथमविभागेऽन्तर्भावमर्हन्ति। अधस्तादुदाहृतस्य श्लोकस्य वाच्यार्थव्यङ्ग्यार्थौ परिशीलयामः।

स्थिताः क्षणं पक्ष्मसु, ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः॥

कुमा ५-२४

पार्वती गौरीशिखरे, पिनाकपाणिं पतिमाप्तुमिच्छन्ती तपस्यति स्म। वसन्ततौ कर्तव्यं तपस्समाप्तिमगात्। अथ वर्षा आरभन्त। प्रथमोदबिन्दवः पतितुमारभन्ते स्म। ते च पक्ष्मसु क्षणं स्थित्वा, अधरं ताडयित्वा, स्तनोत्सेधे पतित्वा, चूर्णीभूय, वलीषु स्खलिताश्चिरेण नाभिं प्रपेदिरे। अयमस्य वाच्यार्थः। प्रथमोदबिन्दूनां पतनक्रमे विचार्यमाणे ध्याननिमग्नाया उपविष्टायाः पार्वत्याः स्थितिस्स्पष्टीभवति। ये ध्यानं कर्तुमिच्छन्ति ते नासाग्रे दृष्टिं विन्यस्य मुखं पिधाय, वक्षोऽग्रतो विष्टभ्य निषण्णा भवन्ति। एतद्विधानं प्रथमोदबिन्दूनां विशेषणक्रमविचारणेन नूनं स्पष्टीभवति।

पार्वत्यास्सौन्दर्यमपि विशेषणक्रमेणानेन वयं ज्ञातुं प्रभवामः। पक्ष्मसु बिन्दूनां क्षणं स्थित्या,पक्ष्मणां सान्द्रत्वमवसीयते। उदबिन्दूनामधरे निपत्य क्षतिकरणेनाधरोष्ठो मृदुल इति व्यज्यते। बिन्दूनां स्तनोत्सेधनिपातेन चूर्णीभाववर्णनेन कुचयोः काठिन्यं व्यज्यते। वलीषु स्खलिता

इत्यनेन नाभेरतिगाम्भीर्यं व्यज्यते। सान्द्राणि पक्ष्माणि, मृदुलमधरं कठिनौ कुचौ, विस्पष्टं वलित्रयं, गम्भीरा नाभिश्च यस्या वनिताया भवन्ति, सा पद्मिनीजातावुत्पन्ना वनितेति सौन्दर्यवतीति च सामुद्रिक शास्त्रे कथितम्। एवं तस्यास्सौन्दर्यमपि श्लोके निरूपितम्।

कालिदासादीनां पञ्चषाणां महाकवीनां रचना व्यङ्ग्यार्थ-प्रधाना भवन्ति। इतरेषां कवीनां रचनास्तु द्वितीये तृतीये वा विभागेऽन्तर्भवन्ति। द्वितीयतृतीयविभागावपि न न्यूनौ। तयोः केवलस्य व्यङ्ग्यार्थस्याप्राधान्यं भवति। अर्थालङ्कारैरलङ्कृता रचना अर्थचित्रमिति शब्दालङ्कारैरलङ्कृता रचना शब्दचित्रमिति च कथ्येते। प्रसन्नविस्तीर्णा-अर्थचित्रमीमांसा बहुभिर्बहुषु ग्रन्थेषु कृतेतीदानीं सहृदयानां मनोविनोदाय श्रुतिसुभगा शब्दचित्रमीमांसा मया प्रस्तूयते।

शब्दचित्रे शब्दचमत्कारः प्रथमं स्थानमर्हति। भूरविरिति प्रसिद्धो भारविः, एकेनैवाक्षरेण श्लोकमेकं प्रणीतवान् शृणुत सावधानम्।

[1]ननोननुन्नो नुन्नोनो, नाना, नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत्॥

किरा १५–१४

---

१. नेति–पदच्छेदस्तावत्–न, ना, ऊननुन्नः, नुन्नोनः, ना, अना, नानाननाः, ननु,। नुन्नः, अनुन्नः, ननुन्नेनः, ना, अनेनाः, नुन्ननुन्ननुत्। अथ योजना––हे नानानना नानाप्रकाराणि आननानि येषां ते। नानाविधास्या इत्यर्थः। ऊनेन-निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न। तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना ननु अपुरुषः खलु। ऊनाद् भीतः पलायमानस्तु किं वक्तव्यमिति भावः। किं च, नुन्न इनः स्वामी यस्य स नुन्नेनः। स न भवतीति ननुन्नेनः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। स नुन्नो विद्धोऽपि अनुन्नोऽविद्ध एव। यूयमनुन्नस्वामिकत्वादनुन्ना एवेति भावः। तथा नुन्ननुन्ननुदतिशयेन नुन्ना नुन्ननुन्नास्तान्नुदतीति नुन्ननुन्ननुत्। अतिपीडितपीडको ना पुरुषो अनेना निर्दोषो

अर्थगौरवमस्तु वा मा वा। पद्यमिदं श्रोतुरमन्दमानन्दं जनयतीत्यत्र न कस्यापि विप्रतिपत्तिः। भारवेरनन्तरकालीनः प्राप्तश्लाघो माघोऽपि दकारेण श्लोकमेकं प्रणीतवान्।

[1]दाददो दुद्दुद्दादी दादादो दूददीददोः।
दुद्दादं दददे दुद्दे, ददाददददो ददः॥

शिशु १९-११४

---

न भवतीति, किन्तु सदोष एवेति। "नार्तं नाति परिक्षत" मिति निषेधादित्यर्थः। अयं तु नैतादृश इति न पलायितव्यमिति भावः। अयमेकव्यञ्जनः। अन्त्यस्तकारस्तु न दोषावहः, "नान्त्यवर्णस्तु भेदकः" इत्यभ्यनुजानात्।

अस्यायं भावः—दशदिशः प्रति पलायमाना हे सैनिकाः! स्वस्मात् हीनेन बाधितः पौरुषवान्न भवति। यो हीनं बाधते सोऽपि न पौरुषवान्। स्वयं बाधितोऽपि योऽबाधितप्रभुः स न बाधितः। स न कदापि निर्दोषः, यो बाधितं बाधते।

१. दादाद इति—दद्यते इति दादः दानम्। "दद दाने" इति कर्मणि घञ्। दादं ददातीति दाददो दानप्रदः। आतोऽनुपसर्गे कः। दुद्दुद्दादी दुत् उपतापः "टु दु उपतापे" क्विप्। दुतमुपतापं ददति साधूनामिति दुद्दाः खलाः। पूर्ववत् कः। तेषां दुतमुपतापं ददत इति दुद्दुद्दादी। दद दाने इति धातोर्णिनिः। दादादः। दाः शुद्धिः 'दैप् शोधने' क्विप्। तां ददत इति दादादः, 'दद दाने' कर्मण्यण्। दूददीददोः। दूः परितापः। 'दूङ् परितापे' क्विप्। ददतीति दूदा दुष्टाः। दीः क्षयः। दीङ् क्षये क्विप्। तां दत्त इति दीदौ नाशदौ। उभयत्रातोऽनुपसर्गे कः। दूदानां दीदौ दुष्टमर्दकौ दोषौ भुजौ यस्य सः दूददीददोः। दुष्टभञ्जकभुज इत्यर्थः। ददाददददः। ददन्ते इति ददाः दातारः। न ददन्ते इति अददाः अदातारः, तेषां द्वयानामपि ददो दाता ददाददददः। सर्वत्र 'दद दाने' पचाद्यच्। अदन्तीत्यदाः बकासुरप्रभृतयः। अदेः पचाद्यच्। तान् द्यति खण्डयतीति अददः। 'दो अवखण्डने' 'आतोऽनुपसर्गे कः'। एवंभूतो हरिः। दुतं ददातीति दुद्दः, दुःखदः, तस्मिन् दुद्दे शत्रौ। दुतः ददते इति दुद्दादं शस्त्रम्।

माघभारवी द्वाभ्यामक्षराभ्यामेव पञ्चषान् श्लोकान् प्रणिन्याते। महाकवेर्माघस्य द्वयक्षरप्रासश्श्लोकोऽयमाकर्ण्यताम्।

भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः॥
शिशु. १९-६६

भकाररकाराभ्यां रचितश्श्लोकोऽयमाकर्षत्यतीव सचेतसां चेतांसि।

[1]चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः।
चचाररुचिरश्चारु चारैराचारचञ्चुरः॥

भारवेः द्वयक्षरप्रासश्लोकोऽयम्। किरा १५-३८

एकैकस्मिन् पादे एकैकेनाक्षरेण केचन श्लोका लिखिताः। एते सहृदयानां कर्णरसायनं भविष्यन्ति। शृणुत सावधानम् एकाक्षरपादः यथा—

---

'दद दाने' कर्मण्यण्। ददते ददौ। प्रयुक्तवानित्यर्थः। 'दद दाने' कर्तरि लिट्। एकाक्षरानुप्रासोऽलङ्कारः।

अस्यायं भावः--दानप्रदः, खलोपतापी, परिशुद्धिजनकः, दुष्टानां बाधको बाहू यस्य सः; दातृभ्योऽदातृभ्यश्च दाता श्रीकृष्णः शत्रौ खड्गं निचिक्षेप। इति।

१. चारेति–चारैर्गतिविशेषैर्वित्त इति चारचुञ्चुः। 'तेन वित्त श्चुञ्चुप्चणपौ' इति चुञ्चुप्रत्ययः। चिरमारेचयति रिक्तीकरोति शत्रूनिति चिरारेची। चञ्चतः चलतश्चीरस्य वल्कलस्य रुचा प्रभया। रोचत इति रुचः शोभमानः। 'इगुपधज्ञाप्रीकिरः कः' इति कः। रुचिरस्सुन्दरः। चञ्चर्यते भृशं चरतीति चञ्चुरः। चरते र्यङन्तात्पचाद्यच्। 'चरफलश्च' इति नुमागमः। यङोऽचि च इति यङो लुक्। आचारस्य युद्धव्यवहारस्य चञ्चुरो भृशमाचरितः स मुनिश्चारु यथा तथा चारैश्चक्रबन्धादिगतिविशेषैः। चचार। 'चारः प्रियालवृक्षे स्याद्गतौ बन्धापसर्पयोः' इति विश्वः।

[1]जजौजो जाजिजिज्जाजी, तन्ततोतितताततितुत्।
भाभोऽभीभाभिभूभाभू रारारिररिरीररः॥

शिशु. १९-३

चतुर्षु पादेषु जतभरैरक्षरैरमुं श्लोकं लिखितवान्। भारवेरयं श्लोकोऽपि सकृत् कर्णगोचरः क्रियताम्।

[2]स सासिः सासुसूः सासो येयायेयाययाययः।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन्॥

किरा १५-५

---

१. जजाविति--ततोऽवलोकनानन्तरं जजन्तीति जजा योधाः। जज युद्धे पचाद्यच्। जजानामोजसा जाता जजौजोजा तामाजिं जयतीति जजौजोजाजिजित्। जयतेः क्विप् जजतीति जाजी योधी। ताच्छील्ये णिनिः। अतितताननत्युद्धतानति तुदति अतिव्यथयतीत्यतितुत्। तुदतेः क्विप्। भस्येवाभा यस्य स भाभो नक्षत्रकान्तिः। 'नक्षत्रमृक्षं भं तारा'' इत्यमरः। नास्ति भीर्येषां तेऽभियो निर्भीकाः तानिभान् गजानभिभवतीति अभीभाभिभूः। तस्य भासस्तेजसो भूः स्थानम् अभीभाभिभूभाभूः। अरास्सन्त्येषामित्यरीणि चक्राणि तैः रिणन्ति गच्छन्तीति अरिरयो रथाः। 'री गतिश्लेषणयोः इति धातोः क्विप्। तेषां ईरणं प्रेरणं राति अरिरीररो रथिकः। 'आतोऽनुपसर्गे कः' अरिश्शत्रुर्बलभद्रः तं वेणुदारिणं आर योद्धुमाससारेत्यर्थः। भिन्नैकाक्षरपादाख्योऽनुप्रासभेदः। भाभ इत्युपमानुप्रासयोरेकवाचकानुप्रवेशलक्षणसङ्करः॥

२. स सासिरिति--सहासिना वर्तमानस्सासिः सखड्गः। असून् सुवन्ति प्रेरयन्तीति असुसुवो बाणाः, ''षू प्रेरणे'' इति धातोः 'सत्सूद्विष' इत्यादिना क्विप्। असुसूभिरसह वर्ततइति सासुसूस्सबाणः। अस्यन्ते क्षिप्यन्ते शरा अनेनेत्यासो धनुः। आसेन सह वर्तत इति सासः। सचापः। येया यातव्या यानसाध्याः, अयेयाः अयातव्या यानं विनैव साध्याः। येयाश्च अयेयाश्च येयायेयाः, तेषां द्वयानामाये स्वर्णगजादिलाभे याति प्राप्नोतीति येयायेयायः। अयः शुभावहदैवं यातीत्यययः, येयाययश्चासौ अययश्चेति--येयायेयाययाययः अतो ललति विलसतीति ललः

शब्दचमत्कारमभिवर्धयितुं पुनरुक्तवदाभास-छेकानुप्रास-वृत्त्यनुप्रास-लाटानुप्रासाः अपि प्रभवन्ति ।

यत्रार्थः पुनरुक्तवदवभासते, अन्वयवेलायामन्यथा भवति, स पुनरुक्तवदाभासालङ्कारः यथा—

जिष्णुरिन्द्रः क्षितिभुजां श्रीपतिः पुरुषोत्तमः ।
भास्वान् सूर्यः स्फुरत्तेजाः काकतीन्द्रो विराजते ॥

प्रताप पृ. २४६

"यत्राव्यवहितव्यञ्जनयुग्मयोः पौनरुक्त्यं तत्र च्छेकानुप्रासः । यथा--

महीमहीनविभवे धत्ते क्षेमंकरे करे ।
राजन्यजन्यविजयी राजा राजद्गुणोदयः ॥

प्रताप पृ. २४८

एकद्विप्रभृतीनां व्यञ्जनानां यदा पुनरुक्तिस्तदा वृत्त्यनुप्रासः ।
तत्र तोयाशयाशेषव्याकोशितकुशेशया ।
चकाशे शालि किशारु कपिशाशामुखा शरत् ॥

का. सं.

अत्र शकारस्यासकृदावृत्त्या वृत्त्यनुप्रासः ।

यत्र शब्दार्थयोरुभयोरपि तात्पर्यभेदवत् पौनरुक्त्यं भवति तत्र लाटानुप्रासः यथा—

---

"लल विलासे" पचाद्यच् । ललीलो, अचपलः, शशिन ईशश्शिवः । तस्य शिशुः स्कन्दः तं शृणाति । हिनस्तीति शशीशशिशुशीः क्विप् । शशन् प्लुतगतिं कुर्वन् शश प्लुतगतौ इति धातोः शतृप्रत्ययः । सोऽर्जुनो लीलां शोभां ललौ प्राप । ला आदाने कर्तरि लिट् ।

कविराजमविज्ञाय कुतः काव्यक्रियादरः।

कविराजं च विज्ञाय कुतः काव्यक्रियादरः॥

वा. सू. पृ. १०९

यथा वा

कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।

कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥

अस्ति शब्दचमत्कारस्य परिपोषणे यमकस्य मुख्यं स्थानम्। किं नाम यमकम्?, यम्यते गुण्यते आवर्त्यते पदमक्षरंवेति यमः। बहुलग्रहणात् कर्मणि घप्रत्ययः। यम एव यमकम्। भिन्नार्थमेकमनेकं वा पदं, तद्वदेकमनेकं वाक्षरं च स्थाननियमे सति आवृत्तं यमकं भवति। तथा च पदयमकं अक्षरयमकमिति यमकस्यैव द्वैविध्यं सिद्धम्। तदुक्तं वामनेन—"पदमनेकार्थमक्षरं वा वृत्तं स्थाननियमे यमकम्" का.स.४–१। पादाः एकस्य च पादस्य आदिमध्यान्तभागाः अनेकस्य च पादस्य त एव स्थानानि। तदुक्तं वामनेन-पादाःपादस्यकस्यानेकस्य चादिमध्यान्तभागाः स्थानानि॥ का. सू. ४–२. तदुक्तं काव्यादर्शे दण्डिना—

"अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः।

यमकं, तच्च पादानामादिमध्यान्तगोचरम्॥

का. द. ३–१

इदं यमकं पादयमकं पदयमकं अक्षरयमकं चेति त्रिविधम्। एकस्यैव पादस्य द्विरावृत्तौ पादयमकम्। यथा—

[1]विकचवारिरुहं दधतं सर-

स्सकलहंसगणं शुचिमानसम्।

---

१. विकचेति–विकचवारिरुहं नित्यविकसितारविन्दमित्यर्थः वृत्तिसामर्थ्यात्। कलहंसगणैस्सह वर्तत इति सकलहंसगणम्। "कादम्बः कलहंसस्स्या" दित्यमरः।

शिवमगात्मजया च कृतेर्ष्यया
सकलहं सगणं शुचिमानसम् ।।

किरा ५-१३

अत्र द्वितीयचतुर्थपादौ आवृत्तिं प्राप्तौ । पादस्य आदौ वा मध्ये वा पदस्य द्विरावृत्तिः पदयमकम् । आदियमकं यथा —

हन्त हन्तरराती नां धीरधीरर्चिता तव ।
कामं कामन्दकीनीतिरस्या रस्या दिवानिशम् ।।

का. सू. पृ-१००

अत्र चतुर्षु पादेषु यमकस्य आदौ विद्यमानतया आदियमकम् । मध्ययमकं यथा---

नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकय-
त्स सुरभिं सुरभिं सुमनोभरैः ।।

शिशु–६-२

पादमध्ये यमकस्य विद्यमानतया मध्ययमकम् । अन्तयमकं यथा—

---

यद्वा, सकलास्सर्वे हंसगणा यस्मिन्तत्तथोक्तम् । शुचि नित्यनिर्मलं मानसं मानसाख्यं सरो दधतम् । किंच कृतेर्ष्यया । कुतश्चिन्निमित्तात् कुपितयेत्यर्थः । अगात्मजया पार्वत्या सकलहं सविवादं । सगणं सप्रमथं । ''गणाः प्रमथसंख्यौघा'' इति वैजयन्ती। शुचिमानसं अविद्याविनिर्मुक्तचित्तं शिवं च दधतम् । एतेन सकलवैलक्षण्यमस्य शैलस्योक्तम् ।

सुलभैस्सदा नयवता यवता
निधिगुह्यकाधिपरमैः परमैः ।
अमुना धनैः क्षितिभृतातिभृता
समतीत्य भाति जगती जगती ॥

किरा ५–२०

। पादान्ते यमकस्य विद्यमानतया अन्तयमकम् । द्वयोःपादयोरादियमकं यथा—

श्रीरङ्गे शोभते यस्य श्रीरङ्गे शोभते च यः ।
नमोऽहं कलये तस्मै न मोहं कलये ततः ॥

विश्व. च–७५४ श्लो.

प्रथमद्वितीययोः पादयोरादौ तृतीयचतुर्थयोः पादयोरादौ च यमकस्य विद्यमानतया आदियमकम् द्वयोः पादयोर्मध्ययमकं यथा–

"अप्यशक्यं त्वयादत्तं दुःखं शक्यन्तरात्मनि ।
बाष्पो वाहीकनारीणां वेगवाही कपोलयोः ॥

का. सू, पृ. १०१

पादयोर्मध्ये यमकस्य विद्यमानतया मध्ययमकम् । द्वयोः पादयोरन्तयमकं यथा–

सपदि कृतपदस्त्वदीक्षितेन
स्मितशुचिना स्मरतत्त्वदीक्षितेन ।
भवति बत जनस्सचित्तदाहो
न खलु मृषा कृत एव चित्तदाहो ॥

का. सू. पृ. १०२

पादयोरन्ते यमकस्य विद्यमानतया अन्तयमकम् । एकान्तरितपादादियमकं यथा

[1]करोऽतिताम्रो रामाणां तन्त्रीताडनविभ्रमम् ।
करोति सेर्ष्यं कान्ते च, श्रवणोत्पलताडनम् ॥

का. द. ३-२१

अत्र प्रथमतृतीययोः पादयोरादियमकम् । अत एकपादान्तरितयमकम् ।

एकान्तरितपादमध्ययमकं यथा—

यान्ति यस्यान्तिके सर्वेऽप्यन्तकान्तमुपाधयः
तं शान्तचित्तवृत्तान्त कालीकान्तमुपास्महे ॥

का. सू. का. ४-१-१०२

अत्र द्वितीयचतुर्थयोः पादयोर्मध्ययमकम् । यमकस्य तृतीयपादान्तरितत्वेन एकान्तरितपादमध्ययमकम् ।

एकान्तरितपादान्तयमकं यथा —

उद्वेजयति भूतानि यस्य राज्ञः[2] कुशासनम् ।
सिंहासनवियुक्तस्य तस्य क्षिप्रं[3] कुशासनम् ॥

का. सू. १०२

अत्र द्वितीयचतुर्थयोः पादयोरन्तयमकम् । यमकस्य तृतीयपादान्तरितत्वेन, एकान्तरितपादान्तयमकम् ।

---

१. रामाणां रमणीनां अतिताम्रः करः तन्त्रीताडनविभ्रमं वीणावादनविलासं तथा कान्ते सेर्ष्यं सप्रणयकोपं यथा तथा श्रवणोत्पलताडनं कर्णोत्पलाभ्यां प्रहारं करोति । अत्र प्रथमतृतीयपादगतं व्यवहितं मिश्रमादिभागयमकम् ।

२. कुत्सितं शासनं कुशासनम् ।

३. कुशानामासनं कुशासनम् ।

चतुर्ष्वपि पादेषु अन्तयमकं यथा-

[४]नतोन्नतभ्रूगतिबद्धलास्यां
विलोक्य तन्वीं शशिपेशलास्याम् ।
मनः किमुत्ताम्यसि चञ्चलास्यां
कृती स्मराज्ञा यदि पुष्कला स्याम् ।।

का. सू. वृ. १०२

अन्ते "लास्याम्" इत्यस्य चतुर्ष्वपि पादेष्वावृत्तेः उपर्युक्तं यमकम् ।

शृंखलायमकं यथा-भारवेरयं श्लोकः—

सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ।
मताफणवतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ।।

किरा. ५-२७

यथा वा,

समीरशिशिरशिरस्सु वसतां
सतां जवनिका निकामसुखिनाम् ।
बिभर्ति जनयन्नयं मुदमपा-
मपायधवला वलाहकततीः ।।

शिशु ४-५२

माघस्यायं श्लोकः ।

४. 'नतोन्नतेति-हे चञ्चल मनः, नते उन्नते च भ्रुवौ तयोर्गतिभिर्वलनाभङ्गीभिः बद्धं लास्यं शृङ्गारनटनं यया ताम् । शशीव पेशलं मनोज्ञमास्यं यस्यास्ताम् । तन्वी विलोक्य किमुत्ताम्यसि । अस्यां तन्व्यां स्मराज्ञा यदि पुष्कला भवेत् । तर्हि कृती स्यामिति सम्बन्धः ।

सर्वपादयमकं यथा—

[1]विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीश मार्गणाः ।
विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः ।।

किरा – १५–५२

महायमकं यथा,

[2]समानयास ! मानया समानयासमानया
समानया समानया समान या समानया ।

का. द. ३–७१

अत्र पादचतुष्टयाभ्यासे पादखण्डस्यापि अभ्यासान्महा-यमकम्

तदुक्तम् दण्डिना—

"एकाकारचतुष्पादं
तन्महायमकाह्वयम् ।

---

१. विकाशमिति--जगतीशस्य पृथिवीपतेरर्जुनस्य मार्गणा बाणा विकाशं प्रसारम् । ईयुः । तथा, जगति लोके ईशमार्गणाः शम्भुशराः विकाशं विषमगतिं ईयुः भङ्गमीयुरित्यर्थः । तथा जगतीं पृथ्वीं श्यन्ति तनूकुर्वन्तीति जगतीशा दानवाः । तान्मारयन्तीति जगतीशमारः ।

ते च ते गणाः प्रमथाः जगतीशमार्गणाः । विकाशमुल्लासं हर्षं । ईयुः प्रापुरित्यर्थः । अहो देवेप्यस्य पराक्रमप्रसर इति विस्मयादिति भावः । तदानीं मार्गयन्तीति मार्गणा अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयो वीनां पक्षिणां काशो तिरत्रेति विकाशमाकाशम् । ईयुः । दिदृक्षयेति भावः ।

२. समानयेति--अत्रायं पदच्छेदः--समानयास, मा, अनया, समानय, असमानया, समानया, समानया, समान, या, समानया । इति ।

तत्रापि दृश्यतेऽभ्यासः
सा परा यमकक्रिया ।। का. द. ३-७०

अर्धपादस्य प्रतिलोमावृत्त्या समग्रः पादः, पूर्वपादस्य प्रतिलोमावृत्त्या उत्तरपादः, पूर्वार्धस्य प्रतिलोमावृत्त्या उत्तरार्धं, तथा एकस्य श्लोकस्य–प्रतिलोमावृत्त्या श्लोकान्तरं च निष्पद्यते ।

[1]नानाजाव, वजानाता सा जनौघघनौजसा ।
परानिहाहानिराप तान्वियाततयान्विता ।।
शिशु. १६-४०

---

हे समानयास ! समानः यासः प्रयत्नः यस्य तत्सम्बुद्धौ, सर्वत्र तुल्ययत्न इत्यर्थः । तथा समान ! समदर्शिन् ! सर्वत्र आत्मवद्दर्शन इत्यर्थः । असमानया निरुपमया समानयामानवत्या समानया सम्माननीयया अनया नायिकया मा मां समानय सङ्गमय । या नायिका, मा च नयश्च मानयौ ताभ्यां सह वर्तत इति समानया मा लक्ष्मीश्शोभा च, नयः नीतिः विद्या इत्यर्थः । ताभ्यां सह वर्तमाना सुन्दरी विदुषी चेत्यर्थः । अतोऽस्यास्सङ्गमोऽतीवादरणीय इति भावः । अत्र पादचतुष्टयाभ्यासे पादखण्डस्याप्यभ्यासात् महायमकम् ।

१. नानेति—इहास्यां नानाविधायामाजौ चित्रयुद्धे ओजसा तेजसा, अवजानाना अवज्ञां कुर्वती । जनौघैः घना सान्द्रा जनौघघना बहुजनेत्यर्थः । अहानिरभया वियाततया वैयात्येन धार्ष्ट्येनान्विता धृष्टेत्यर्थः । "धृष्टो धृष्णुर्वियातश्च" "इत्यमरः । सा चैद्यसेना परानरीनाप प्राप । अत्र प्रतिपादं पादार्धस्यैवावृत्तेः अर्धपाद प्रतिलोमयमकम् ।

वारणेति—कीदृशी सेना वारणैरेवागैरचलैर्गभीरा दुरवगाहा वारणागगभीरा सा साराणां श्रेष्ठानां नभियं गच्छन्तीत्यभीगानां निर्भीकाणां गणानां जन्तुसङ्घानामारावो यस्यां सा साराभीगगणारवा । कारितारिवधा कृतशत्रुवधा । "रामो राज्यमकारयत्" इतिवदत्र स्वार्थे णिच् । नास्त्यासेधः प्रतिषेधः यस्यां सा नासेधा नञर्थेन नशब्देन बहुव्रीहिः । अनासेधा वा, वरितारिका ईक्षितशत्रुका अनेनाहं योत्स्य इति स्वयं वृतप्रतिभटेत्यर्थः । सा सेना पपातेति पूर्वेणान्वयः ।

अत्र प्रतिपादं पादार्धस्यैवावृत्तेः अर्धपादप्रतिलोमयमकम् ।

पादप्रतिलोमयमकं यथा—

वारणागगभीरासा साराभीगगणारवा ।
कारितारिवधासेना नासेधावरितारिका ॥

शिशु. १९–४४

अर्धावृत्तियमकं यथा—

[1]तं श्रीयाघनयानस्तरुचा सारतया तया ।
यातयातरसाचारु स्तनयानघयाश्रितम् ॥

शिशु. १९–८८

अत्र प्रातिलोम्यादर्धावृत्तेः अर्धावृत्तियमकम् ।

श्लोकावृत्तियमकं यथा—

[2]वाहनाजनि मानासे साराजावनमाततः ।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥

शिशु. १९–३३

---

१. तमिति--घनया आनन्दसान्द्रया, अनस्तरुचा अक्षीणकान्त्या सारतया सारत्वेन सर्वोत्कर्षगुणेन, यातया व्याप्तया, चारुस्तनया रम्यकुचया, अनघया-निर्दोषया तया प्रसिद्धया श्रिया रमया, तरसा त्वरया, श्रितमालिङ्गितं तं हरि-मुद्वीक्ष्येत्युत्तरेण सम्बन्धः । अत्रापि प्रातिलोम्येनार्धावृत्तेरर्धप्रतिलोमयमकम् ।

२. वाहनेति--तत्रेऽन्तरं मानमभिमानं अस्यति क्षिपतीति तस्मिन् मानासे अहङ्कारहारिणि, मत्ताः सारगाः बलभाजश्च राजेभा नृपगजाः यस्मिन् मत्तसारग राजेभे साराजौ श्रेष्ठ युद्धे । आजेः पुल्लिङ्गता ज्ञेया । भारी भारवान् पूर्ण ईहावतामुत्साहवतां जनानां ध्वनिर्यस्मिंस्तत् भारीहावज्जनध्वनि यथा तथा न नमतीति अनमा अभङ्गुरा वाहनानिर्वाहयितृत्वम् । अजनि जाता । सैनिकाना-मित्यर्थात्सिद्धम् ।

[1] निध्वनज्जवहारीभा भेजे रागरसात्तमा ।
ततमानवजारासा सेना मानिजनाह्वा ॥

शिशु. १९-३४

प्रथमश्लोकस्य प्रातिलोम्यात् द्वितीयश्लोक उत्पद्यते ।

मुक्तपदग्रस्तयमकं यथा—

दिव्यश्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीडाः ।
पीडाभाजः कुसुमचितास्साशंसं
शंसन्त्यस्मिन्सुरतविशेषं शय्याः

किरा - ५ - २३

अक्षरयमकं द्विविधम्—एकाक्षरमनेकाक्षरं चेति ।

एकाक्षरयमकं यथा —

नानाकारेण कान्ताभ्रू राराधितमनोभुवा
विविक्तेन विलासेन ततक्ष हृदयं नृणाम् ।

का. सू—१०३

सजातीयनैवन्तर्यादस्य प्रकर्षो भवति . स चायं हरिप्रबोधे दृश्यते ।

---

१. निध्वनदिति--निध्वनन्तो बृंहन्तो, जवा, जवनाः हारिणो मनोहराश्चेभाः यस्यां निध्वनज्जनहारीभा । ततो विस्तृतो मानवजो मनुष्यजातः, आरासः कलकलो यस्यां सा ततमानवजारासा । मानिनां मानवतां जनानामाह्वो यस्यां सा मानिजनाह्वा सेना, रज्यतेनेनेति रागः क्रोधः । स एव रसस्तस्मात् रागरसात्, तमोमोहं भेजे क्रोधान्धाजनीत्यर्थः । अत्र प्रातिलोम्येन पूर्वश्लोकस्य (वाहनाजनीत्यस्य) आवृत्तः श्लोकप्रतिलोमयमकम् ।

¹विविधधववनानाजगर्धर्धनाना
विविततगगनानाममज्जज्जनाना ।
रुरुशशललनाना नन स्पस्वनाना
मम हिहित नाना नन स्वस्व नाना ।।

का. सू पृ-१०४

यथा शक्ति शब्दचित्रमीमांसा मया निरूपिता।
सङ्गीतसाहित्ययोस्स्वरूपं शेषेणाप्यशेषं वेदितुमशक्यम् ।

---

१. विविधेति--अत्र पारावारपरिसर मभिलक्ष्य हलधरं हरिराह—विविधानि बहुविधानि धवानामर्जुनानां वनानि यस्यां सा विविधधववना । "धवो वृक्षे नरे पत्या वर्जुने च द्रुमान्तरे" इति वैजयन्ती । नागाः कुञ्जरा स्सर्पावा, तान् गृध्यन्ति अभिलष्यन्तीति नागगर्द्धाः, तथाविधाः ऋद्धास्समृद्धाः ये नानाविधाः वयः पक्षिणः तैर्विततं व्याप्तं गगनं यस्यास्सा नाग गर्द्धर्द्धनाना विविततगगना । न विद्यते नामो नमनं यस्मिन् कर्मणि तत्तथा मज्जन्तो जना यस्यां सा अनाममज्जज्जना । अनिति प्रातितीति अना स्फुरन्तीति यावत् । अथवा न विद्यन्ते नरो यस्यां सा अना । रुरूणां शशानां च ललनं विलसनं यस्य । सा रुरुशशललना नौ आवयोः अबन्धुं शत्रुं, घुनानहि । यस्मात् कारणात् मम हितं तनोतीति हिततना । न विद्यते आननं यस्यासौ अनाननः, स्व आत्मीयः स्वन एव अनः प्राणनं यस्याः सा अनानस्वस्वनाना । एवं विधा समुद्रभूमिरिति वाक्यार्थः ।

# वाणीं भजत गैर्वाणीम्

विदितचरमेव ह्येतत्सर्वेषां यत्—अस्माकं मातृभूमिर्भारतभूमिः, पुण्यभूमिरिति, ज्ञानभूमिरिति कर्मभूमिरिति च प्रसिद्धिमगादिति। "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" त्यार्योक्तिमनुसृत्य मातृभूमिरियं देवभूमेरप्यतिशयिततया, श्लाघनीया स्पृहणीया च। मतप्रवर्तकाचार्यैश्शङ्कर – रामानुज – मध्वाचार्यप्रभृतिभिः वेदान्तिभी रामकृष्णविवेकानन्दरमणमहर्षिप्रभृतिभिः, महाकविभिः, कालिदास, भवभूति, भारविप्रभूतिभिः, गङ्गा-यमुना–कावेरीप्रभृतिभिर्जीवनदाभिर्जीवनदीभिः, श्रीरङ्गश्रीशैलतिरुपत्यादिभिर्दिव्यक्षेत्रैश्च भासमानेयं, आसेतोरां च शीताचलात् एकैव भूमिरिति विख्याता विश्वस्यैव प्रतिनिधिर्विराजते नितराम्। अस्यां वसन्ती जनता, भारतजातिरिति गीयते। ईदृश्या भारतजातेस्संस्कृतभाषैव जातीयभाषा चराचरस्यैवोज्जवलभूषा च। अस्याश्च गीर्वाणभाषेति, अमरवाणीति, दैवबाणीति, अमरभाषेति च बहूनि नामानि विलसन्ति व्यवहारे। लोकव्यवहारे भाषेयमस्ति न वेति विचार इदानीं मास्तु। देवतोद्देशेन द्रव्यत्यागं सभक्तिश्रद्धमग्नौ कुर्वद्भिर्याज्ञिकैर्भाषेयमुपायुज्यतेति, अस्या गीर्वाणभाषेति अमरवाणीति दैववाणिति च नामानि व्यवहारपथं गतानीति दृढो मे निश्चयः। स्वर्गे लोके अजरामरैरमरैरुपयुक्ततया भाषाया अस्या अमरवाणीति नामासीदिति केषांञ्चिदभ्यूहो न समीचीन इति मे प्रतिभाति। मन्ये चाहं प्राकृतभाषायाः प्रतिद्वन्द्वितया संस्कृतभाषेति व्यवहारोऽस्यास्संवृत्तः। प्रकृतिर्नाम प्रजाः प्रजाभिर्व्यवहृततया, अस्याः प्राकृतभाषेति व्यवहारोऽजायत।

गैर्वाण्यां निबद्धस्य, वाङ्मयस्य, अथवा साहित्यस्य संस्कृतवाङ्मयमिति, संस्कृतसाहित्यमिति च व्यवहारस्सर्वतः प्रसृमर आसीत्।

अयं व्यवहारश्श्रीमद्रामायणे भगवता वाल्मीकिना प्रथमं विहित आसीत् ।

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ।।

रामायणम्.

संस्कृतवाङ्मयं द्विविधं, वैदिकवाङ्मयं लौकिकवाङ्मयं चेति । ऋग्यजुस्सामाथर्ववेदास्तेषां ब्राह्मणानि आरण्यकानि, उपनिषदः, श्रौतगृह्यधर्मसूत्रापरनामधेयानि कल्पसूत्राणि, अनुक्रमणीग्रन्थास्तदितरे केचन ग्रन्थाश्च, वैदिकवाङ्मये भजन्त्यन्तर्भावम् । आदिकाव्यं श्रीमद्रामायणं, इतिहासो व्यासरचितं महाभारतं; पुराणानि शास्त्रवाङ्मयं लौकिकवाङ्मयं च लौकिकवाङ्मये भजन्त्यन्तर्भावम् । उभे अपि ते वाङ्मये, इदानीं पठनपाठनयोर्वर्तेते । उपर्युक्तवाङ्मयद्वयस्योपादानकारणं संस्कृतभाषा जगति प्रचलन्तीभ्यस्सर्वाभ्यो भाषाभ्यो विस्तृता, विशिष्टा, विचित्रा च विराजते । वेदचतुष्टयं साहित्येष्वग्रगण्याद् ग्रीकसाहित्याद् द्विगुणं वर्तत इति ग्रीकरोमकोभयसाहित्याभ्यां संस्कृतसाहियमतिशयितं चेत्यभिज्ञानामभिप्रायः । सर्वाभ्योऽपि भाषाभ्यस्संस्कृतभाषा विशिष्टं स्थानमाक्रामतीति भाषाविदामाशयः । सप्तविभक्तयः, त्रीति वचनानि, त्रीणि लिङ्गानि, परस्मैपदित्वमात्मनेपदित्वमुभयपदित्वं चेति धातूनां त्रिभेदता विशेषणानामपि लिङ्गवचनविभक्तिपरत्वं चेत्येत एतद्भाषागोचरा विशेषाः ।

भाषैषा मृतभाषेति, न कदाचिदपि व्यावहारिकी बभूवेति, ग्रीकभाषावलोकनजनितसंस्कारेण, तत्प्रतिद्वन्द्वितया कल्पितेति च केचिदाशेरते । तेषामाशयोऽनादरणीयो न विश्वसनीयश्च, या खलु भाषा पठनपाठनाभ्यां प्रच्युता, साहित्यसृष्टिं कर्तुमपारयन्ती, इतरवाङ्मयेषु प्रवेशमलभमाना, व्यवहारात्प्रच्युता, कृशीभूय भूयोऽपि नाशं प्राप्नुयात्, तां भाषां मृतभाषां व्याहरन्ति भाषाभिज्ञाः । अमरवाणीति विश्रुतेयं

भाषा न तथा। न नहि विदितमेतद्भवतां यत् त्रिसहस्रवत्सरीतः प्रागिवाद्यापि, बहुश्रुतेभ्यो विश्रुतेभ्यस्सुश्रुतेभ्यश्च गुरुभ्यो विनीया विनेया विधेयाश्च शिष्या, विनैव ग्रन्थावलोकनं गुरूच्चारणानूच्चारणविधानेन श्रुतीरभ्यस्यन्ति। धर्मज्योतिस्तर्कमीमांसातिशास्त्राण्यभ्यस्यतो भारतीय-बालान्वयमालोकयामः। क्रियते खलु प्रत्यहं, पल्ल्यां पत्तने च संस्कृत-भाषाया अभ्यासो बालैर्बालिकाभिश्च संप्रवर्तते खलु देवालयेषु प्रतिदिनमुभयोस्सन्ध्ययोः भगवद्गीताया गानं विष्णुसहस्रनाम्नामाम्नायः, वेदपारायणं च। पठ्न्ते ननु प्रतिप्रभातं सुप्रभातस्तोत्राणि तदितरस्तो-त्राणि च।

यद्यपि संस्कृतसाहित्ये सर्वैरपि रचना मा क्रियन्ताम् तथापि कैश्चित् क्रियन्त एव। यद्यपि कृतास्सर्वा रचना मा भवन्तु गताः प्रतमश्रेणीन्, तथापि काश्चिदाक्रामन्ति प्रथमश्रेणीम्। अपि च सर्वासु प्रान्तीयभाषासु संस्कृतभाषायास्सम्बन्धो दरीदृश्यते। आन्ध्रभाषया मिश्रेयं भाषा, तस्या भाषाया भूषणतां सम्पादयन्ती, कलयति विशिष्टं स्थानंमात्मनः। यद्यान्ध्रप्रबन्धेभ्यः संस्कृतं पृथक् कुर्याम तदा तेषां प्रबन्धानां स्थितिरनिर्वचनीया स्यादिति, विदाङ्कुर्वन्तु सहृदयाः। इदमत्रावद्येयं यत् प्रान्तीयभाषासु संस्कृतस्य विशिष्टं स्थानमस्तीति।

पुरा खल्वियं संस्कृतभाषा व्यावहारिकी सती, प्रचारेऽवर्तत। अत एव भगवान् पाणिनिः दूरस्थितस्य पुरुषस्य सम्बोधने कर्तव्ये, तन्नाम्नश्चरमाक्षरे प्लुतं विहितवान्। यदेयं व्यावहारिकी स्यात्तदैव प्लुतस्य विधानं समीचीनं स्यात्। अपि च दण्डादण्डि, केशाकेशि, उदरपूरं भुङ्क्ते इत्यादीनि रूपाणि पाणिनिना साधितानि। एतान्ये-व्यावहारिकतां साधयन्तीत्यत्र नास्ति संशं तिलेशः। सधितवांश्च भग-वान् कात्यायनस्तदानीन्तनानि व्यावहारिकपदानि स्ववार्तिकैः। महाभाष्यकारः पतञ्जलिरपि देशभेदेन क्रियाभेदानुपर्वाणितवान्नु। सुराष्ट्रे व्यवह्रियमाणाया हम्मतिक्रियायाः स्थाने, प्राच्यदेशे रंहतिरिति,

तस्याः स्थाने गच्छतिरार्यैर्व्यवह्रियत इति च विज्ञायते। महाभाष्ये क्वचित् स्थितात् रमणीयाद्वैयाकरण-रथवाहकसंवादात् एतद्विज्ञातुं शक्यते यत् पुरा संस्कृतं व्यावहारिकी भाषाऽभूदिति। विद्वत्कविकल्पभूजस्य भोजस्य संस्थाने निर्वक्रविक्रमस्य विक्रमस्य नवरत्नभूषितायां च संस्कृतभाषाया व्यावहारिकत्वसम्पादने बहूनि प्राचीनानि प्रमाणान्यस्माभिरूपलभ्यन्ते। महदिदं नः प्रमोदस्थानं यत् पुरेवाद्यापि संस्कृतभाषां भाषमाणास्सन्त्येव बहुषु प्रदेशेषु बहवः पण्डिताः। बहुदिनसाध्येष्वध्वरेषु पञ्चाहसाध्येषु पाणिग्रहणमहोत्सवेषु द्विजातीनामुपनयनमहोत्सवेषु, अपरेषु गृह्यकर्मसु च संस्कृतभाषां मुपयुञ्जन्ति जनाः।

आसेतुशीताचलं निवसन्त्या भारतजात्याः प्रधानभाषा संस्कृतभाषेत्यत्र न कस्यापि विप्रतिपत्तिः। उत्तरापथवृत्तीनां भाषाणां सर्वासामपीयं भाषा जननीत्यत्र न कश्चिदपि संशीतिलेशो नापि कश्चनावेशः। नेदं वितथं वचो यत् प्रान्तीयभाषासु संस्कृतभाषायाः प्रभावो वर्ततेतरामिति। संस्कृतभाषामनभ्यस्यतां प्रान्तीयभाषासु निर्दिष्टा च पण्डिती नोत्पद्यते। मानवानां संस्कृतिस्संस्कृत एव सुरक्षितेति वदन्तो वयं मन्यामहे नापभाषिणस्स्म इति। मानवाभ्युदयस्य मूलं चतुर्विधपुरुषार्थाः। ते च धर्मार्थकाममोक्षाः। एषु प्रथमः पुरुषार्थो धर्मः। चरमः पुरुषार्थो मोक्षः। धर्मार्थकामा, मोक्षपुरुषार्थस्य। भवन्त्यङ्गानि। अर्थकामौ च धर्मस्याङ्गे भवतः। धर्मो नाम वेदेन विधीयमानस्सप्रयोजनोऽर्थः। "चोदनालक्षणोऽर्थो धर्म" इति हि मीमांसका आमनन्ति। अस्माभिर्यो धर्मो रक्ष्येत स धर्मोऽस्माकं रक्षणं कुर्यात्। सत्योऽयं लोकप्रवादो यत् "धर्मो रक्षति रक्षित" इति। धर्मश्च विधिनिषेधरूपः। धर्मस्य मूलं वेदः। वेदविदां स्मृतिशीले च। अत एवोक्तं महर्षिणा गौतमेन "वेदो धर्ममूलम्।" "तद्विदां च स्मृतिशीले" इति। यदि वयं धर्मस्य मर्माणि वेदितुं कृतप्रयत्नास्स्याम, स्वाध्यायोऽवश्यमध्येयो भवेत्। वेदार्थावगाहनाय, संस्कृतभाषाध्ययनस्यावश्यकता स्यात्। वेदार्थोपबृंहणाय स्मृतय इतिहासाः पुराणानि च निरमीयन्त। अर्थपुरुषार्थसाधनाय कौटिल्यादीनामर्थशास्त्रादीनि चा-

वश्यपठनीयानि । उक्तपूर्वोऽयं विषयो मोक्षः प्रधानपुरुषार्थ इति, तत्साधनाय वेदान्तशास्त्रस्यावश्यपठनीयतेति च । प्रेयश्श्रेयश्शास्त्रयोरुभयोरपि, संस्कृतभाषायामेव विद्यमानतया तामभ्यस्यतां भोगमोक्षौ करतलामलके भवतः । भारतीयानामितिहासेन साकं चीना, जपान्, कोरिया, देशवासिनामितिहासश्च संस्कृतवाङ्मय एव सुरक्षितो वर्तते ।

राजनीतिरायुर्वेदो ज्यौतिषमङ्कगणितं रेखागणितमितीमानि संस्कृतभाषायामेव निपुणैर्निबद्धानि लोकोपकारकानि भवन्तीति विदितमेवैतत् सर्वेषाम् । सूत्रवाङ्मयं संस्कृतवाङ्मये महतीं वृद्धिमभजत । यथास्यां भाषायां सूत्राणि निबद्धानि, न तथा जगत्यन्यासु भाषासु । तेषामर्था अनन्ता, अनल्पा, अमिताश्च । कल्पसूत्राणि शुल्बसूत्राणि सूत्रवाङ्मयस्य समीचीनान्युदाहरणानि । शुल्बसूत्राणि रेखागणितस्य परां काष्ठामावेदयन्ति । नेयमतिशयोक्तिरत्युक्तिर्वा किन्तु स्वभावोक्तिर्यत् पाणिनीयानि सूत्राणि सूत्रवाङ्मयस्य चरमां सीमामधितिष्ठन्तीति। तानि रमणीयायां शैल्यां रचितानि । तेषां संक्षिप्तता स्फुटता गम्भीरार्थता पाटवं च सर्वैः स्पृहणीयानि श्लाघनीयानि च भवन्ति । सन्ति तत्र बहूनि द्व्यक्षराणि सूत्राणि । तत्र "अ अ" इति सूत्रमतिमात्रगम्भीरमतीव मनोहरं च । भगवता पाणिनिना चतुस्सहस्रेषु सूत्रेषु वाङ्मयोपयोगि सर्वं व्याकरणं समुचितया रीत्या समुपनिबद्धम् । एषां सूत्राणां "अष्टाध्यायीति" नाम जगति सुप्रसिद्धमासीत् । पाणिनीयाद्व्याकरणादतिशयितं व्याकरणं कस्याञ्चिदपि भाषायां न वयं पश्यामो द्रक्ष्यामश्च ।

न्यायवैशेषिके, पूर्वोत्तरमीमांसे च वाङ्मयेऽस्मिन् प्रापुरपरिमितां वृद्धिम् । मानवस्य मननशक्तेर्निदर्शनानि दर्शनानि कानिचित्, अस्मिन् वाङ्मये समुत्पन्नानि । वैदिकधर्मास्तद्विरुद्धा बौद्धधर्माश्च संस्कृतभाषायां सुप्रतिष्ठिताः । भारतीयानां पारायणग्रन्थेषु रामायणमहाभारत-भागवतेषु आर्याणां संस्कृतिर्नागरिकता च सुष्ठु निक्षिप्ते। संस्कृतं भारतीयसंस्कृतेर्मूलम् । यदि संस्कृतं संरक्ष्यते तर्हि भारती-

संस्कृतिस्संरक्ष्यते। यदि यूयं भारतीयसंस्कृतिं रक्षितुं कामयेध्वम्, संस्कृतभाषाया रक्षणं कर्तुं यतध्वम्। जानीत यूयं यत् संस्कृतभाषा-संरक्षणं नाम भारतीयसर्वभाषासंरक्षणम्। यदि वयं जलेन सिञ्चेम वृक्षस्य मूलं, तदा तदङ्गानां पत्रपुष्पफलानामपि संरक्षणमवश्यं भविष्यति। यदि संस्कृतभाषासंरक्षणं क्रियते, तदा भारतीयसंस्कृतिस्संरक्षिता भविष्यति। तस्मादियं संस्कृतभाषा समेषां भारतीयानां सर्वदा सर्वथा श्लाघनीया, स्पृहणीया, पठनीया च। अत एव, युक्तमुक्तमभियुक्तैः 'वाणीं भजत गैर्वाणी' मिति।

# कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि

विदितचरमेव ह्येतत्सर्वेषामपि विदुषां यत् अहितनिवृत्तिपूर्विका हितप्राप्तिप्रयोजना च धर्मसंसेवा कर्तव्या सर्वैर्मानवैरिति। को नामायं धर्मः ? किमस्य मूलम् ? किंप्रयोजनोऽयम् ? इत्येतेषां प्रश्नानां समाधानं प्रथमतो देयं भवति। वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः स च विधिनिषेधरूपः। "सत्यं वद", 'धर्मं चर", "स्वाध्यायान्मा प्रमदः" इत्येवं रूपः। वेद्यते ज्ञायतेऽनेन धर्मस्वरूपमिति करणव्युत्पत्त्या, योगरूढ्या च वेदशब्दः मन्त्रब्राह्मणाख्यं ग्रन्थराशिमभिधत्ते। स च वेदो ऋग्यजुस्सामभेदेन त्रिधा भिद्यमानस्त्रयीति व्यवह्रियते। गुरुपरम्परया श्रवणमेवैषां वर्तत इति श्रुतिरिति च पण्डितसमाजे व्यवहारस्समजनि। कालक्रमेणाथर्ववेदस्यापि वेदत्वमङ्गीकृतम्। एवं चत्वारो वेदा धर्मस्य मूलं भवन्ति। वेदविदां स्मृतिशीलयोरपि धर्ममूलत्वमभ्युपगतमाचार्यैः। वेदवच्छास्त्राणामितिहासपुराणादीनां काव्यानां च धर्ममूलत्वमुररीकृतं सुधीभिः। अतो वेदाश्शास्त्राणि, इतिहासपुराणादयः काव्यानि च विहितकर्मणां कर्तव्यतां निषिद्धकर्मणां निराकरणं च बोधयन्ति।

यथा काव्यात् कर्तव्यताधीस्सरसा, अन्यत्र न तथा। यथा कामिनी कटाक्षवीक्षणादिविलासैरेव कामिनमावर्जयन्ती ममेदमभिलषितं कुरु अनभिलषितं मा कुरु इत्यनुक्त्वैव सर्वं सम्पादयति, तथा काव्यश्रीरपि व्यञ्जनाव्यापारमात्रपरत्वेन, उपसर्जनीभूतशब्दार्थतया शब्दार्थप्रधानाभ्यां प्रभुसुहृत्सम्मिताभ्यां वेदपुराणाभ्यां विलक्षणा सती सहृदयहृदयाह्लादकारिणा व्यञ्जनाव्यापारेणैव रामादिवद्वर्तितव्यं न रावणादिवदिति पुंसः कर्तव्ये प्रवर्तयति निवर्तयति चाकर्तव्यादिति।

मानवैस्सर्वैरपि धर्ममार्गगामिभिर्भवितव्यम् । वेदविहितानामपि धर्माणामाचरणे अवश्यकर्तव्येऽपि विद्यार्थिनामुपयोगाय केवलं कतिचन धर्मानत्र निर्दिशामः ।

आद्यन्तशून्यस्य, निखिललोककारणस्य, पुरुषोत्तमस्य देवदेवस्य पूजा सर्वैरपि कर्तव्या । स च सकललोकाध्यक्षः । तदाज्ञयैव वायुर्वाति । सूर्यः प्रकाशते । मेघो वर्षति विश्वम्भरा च सस्यसम्पन्ना जायते । किं बहुना ! विना तदाज्ञया तृणमपि न चलति । पुरुषोत्तमसदृशा गुरवोऽपि पूजनीयाः । ये खल्वज्ञानं निरस्य, विद्यां प्रदाय, भयाहारनिद्रामात्रवेदिभ्यः पशुभ्यो भेदं जनयन्ति । पूज्यपूजां ये न कुर्वन्ति ते न खलु श्रेयसां भाजनं भवन्ति ।

पुरा किल मनुवंशकेतुर्दिलीपो नाम राजा शक्रमुपस्थाय दिवो भुवमागच्छति स्म । धर्मलोपभिया ऋतुस्नातां भार्यामनुस्मरन्, अचिरप्रसूतां कल्पतरुच्छायामाश्रितां प्रदक्षिणक्रियार्हां कामधेनुमप्रदक्षिणीकृत्यैव निजराजधानीमगात् । आराधनीयां निजप्रसूतिमनाराधयतस्तस्योपरि कुपिता कामधेनुः विना मत्प्रसूतेराराधनेन ते प्रजा मा भूदिति शापं दत्तवती । तेन शापेन स चिरमनपत्यो भूत्वा तन्नयनानन्दिनीं नन्दिनीमाराध्य वंशकर्तारं कीर्तिमन्तं च तनयं सुदक्षिणायां लेभे । अत एव कविकुलतिलकेन कालिदासेनाभिहितम् । "प्रतिबध्नाति हि श्रेयः पुज्यपूजाव्यतिक्रमः" रघु-१-७९ इति ।

"सन्ति खलु मानवे शरीरं बुद्धिरात्मा चेति त्रयो भागाः । यद्यपि व्यायामादिना निजशरीरं वर्धयन्तो जनाः मांसला दर्शनीयाकृतयश्च भवन्ति, तथापि बुद्धिबलराहित्येन ते पशुसहोदराः कथ्यन्ते । आत्मानमुपेक्षमाणा ये बुद्धिं परां पुष्टिं नयन्ति ते राक्षसा इत्याख्यायन्ते ये च शरीरं बुद्धिं च निजवशे निधाय स्वात्मगुणान् पुष्णन्ति ते खलु महात्मान इत्यभिधीयन्ते । तादृशा महात्मानस्तत्र तत्र लोके विरला

दृश्यन्ते । को महान् ? इति प्रश्ने धवलदेहः सालप्रांशुः व्यूढोरस्कश्च पुरुषो न भवति महान् । कृशशरीरोऽपि विदितसकलशास्त्रः सकलकलाकुशलः चालितविमानोऽपि, आत्मगुणरहितः पुरुषो न भवति महान् । अनधीयानोऽपि दयाशौचसत्यक्षमाद्यात्मगुणसनाथ एव महानिति वक्तुं शक्यते । अत एव चत्वारिंशता संस्कारैर्विरहितेनापि पुरुषेण दयाशौचादिकमात्मनो गुणाष्टकमुपार्जनीयम् । तदुक्तं गौतमधर्मसूत्रेषु–"दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति ।

दया नाम परहितचिन्तनम् । तदात्वे व्यथाजनकमपि यदुत्तरकाले सुखजनकं तदुच्यते हितमिति । प्रियं नाम तात्कालिकप्रीतिजनकमपि यदुत्तरकाले दुःखजनकम् । मानवैस्सर्वैरपि प्रियं हितं च यद्भवति तदेव वक्तव्यम् ।— तात्कालिककोपजनकत्वेन अप्रियं हितं न सन्तोषाय सम्पद्यते । प्रियमहितं न सन्तुष्टिं जनयति आयतौ बाधाजनकत्वात् । अप्रियमहितं न मुदे कल्पेत । उभयथाप्यश्रेयस्करत्वात् । प्रियं हितं च यद् भवति तदेव कथनीयमादरणीयं च । तादृशं प्रियहितं दुर्लभं खल्वस्मिन् महीतले । अत एवोक्तं भारविमहाकविना–"हितं मनोहारि च दुर्लभं वचः" इति । "अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ।" "सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः" इति प्राचीनोक्ती च सङ्गच्छेते । यः खल्वात्मना समं सर्वेषु भूतेषु दयां प्रदर्शयति स दयालुरिति कथ्यते । तादृशः पुरुष इह लोके सर्वैः स्तूयमानो महतीं कीर्तिं लब्ध्वा परत्र स्वर्गसुखान्यनुभविष्यति ।

पुरा सिंहोरुसत्त्वः पुरुषसिंहो दिलीपः, सिंहेन हन्यमानां गां रक्षितुकामः, स्वदेहमामिषपिण्डमिव क्रूरसत्त्वाय सिंहाय समर्प्य धेनोः प्राणरक्षणमकार्षीत् ।

अपि च, औशीन रशिशबिर्नाम कश्चिद्राजा नृशंसेन श्येनेन हन्यमाने अतिकरुणमाक्रन्दति कपोतपोतके सञ्जातकरुणस्तमेवमवादीत् ।

"न कपोत भवन्तमण्वपि स्पृशतु श्येनसमुद्भवं भयम् ।
इदमद्य मया तृणीकृतं भवदायुःकुशलं कलेबरम् ॥"

ततस्स राजा कपोतप्राणत्राणाय, श्येनस्याहारदानाय च स्वशरीरान्मांसमुत्कृत्योत्कृत्य यावदेकस्यां धटायां न्यक्षिपत् तावत् कपोताधिष्ठतामन्यां धटां नम्रां दृष्ट्वा स्वयमेव धटायां न्यविक्षत् । तदा तुष्टा देवाः पुष्पवृष्टिमवर्षन् । दुन्दुभिध्वानमकुर्वन् । श्येनकपोतौ चेन्द्राग्न्यो रूपे आस्थाय, अभीप्सितान् वरान् महाराजाय दत्त्वा, यथागतं जग्मतुः ।

किं बहुना ! जीमूतवाहनो नाम कश्चिद्विद्याधरः प्राज्यं राज्यं परित्यज्य गुरुशुश्रूषार्थी वनं गत्वा, तत्र मलयवतीं नाम सिद्धसम्भवां कन्यामुपयेमे । ततो दशादिनाभ्यन्तर एव विहङ्गराजेन हन्यमानं नागराजेन प्रेषितं नागकुमारं त्रातुकामस्स्वप्राणानर्पितवान् । अनेनैतत्सुव्यक्तं भवति यत् प्राणैः कण्ठगतैरपि प्राणिनां रक्षणमवश्यकर्तव्यमिति ।

आत्मगुणेष्वन्यतमो गुणः क्षमा नाम । यया विना क्रियमाणान्यपि महान्ति तपांसि भवन्ति निरर्थकानि । अत एव युक्तमुक्तं वाणीहृदयवासिना पञ्चबाणेन बाणेन 'क्षमा हि मूलं सर्वतपसाम्' इति । उत्तरे काले भृशमियमुपकरोति । प्रभूतस्य कर्मफलस्य प्रधानं कारणं भवति । स्वयमविनश्यन्त्यपि शत्रूणां विनाशिनी सम्पद्यते । अनया तुल्यं साधनं किञ्चिदपि विमृश्यमानमपि न दृश्यते । अत एवेदं न व्यभिचारि यत् "न तितिक्षासममस्ति साधनम्" । यश्च क्षमावान्न भवति तस्य कार्याणि न सिध्यन्ति । शरीरमिन्द्रियाणि च भवन्ति भाजनं सन्तापस्य । समयसाधने तस्य नानुकूले भवतः ।

गुणेषु दोषाविष्करणमसूया । तया विरहितः पुरुषोऽनसूयुरिति कथ्यते । स च समस्तभोगभाजनं पुण्यवतां निवासं श्रेयसां निधानं स्वर्गाभिधानं धाम लब्ध्वा निस्सीमानमानन्दं लभते । मङ्गलं नाम शिवकरीष्वेव क्रियासु प्रवृत्तः, सदा सर्वेषां शिवानुध्यानपरो भवेत ।

न कदाप्यमङ्गलचिन्तां मनसापि कुर्यात्। अत एवोक्तं भगवता पतञ्जलिना– 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति। अकार्पण्यं नाम दैन्येन विना जीवनम्। केचित्तु धनवन्तोऽपि यथाशक्ति धनमव्ययन्तो दुर्गतेभ्योऽपि हीनां दुर्गतिमनुभवन्ति तच्च न युक्तमिति निर्णीयते। अत एवोक्तम्–"सति विभवे न जीर्णमलवद्वासास्स्यात् न रक्तमुल्बणमन्यधृतं वासो बिभृयात्" इति। स्पृहा नाम परेषां वस्तुषु लिप्साभावः। ये खल्वस्पृहासहिता भवन्ति ते स्वजीविते बाधां नानुभवन्ति। परेषामुत्कर्षं वीक्षितुं ते शक्नुवन्ति। न कस्याप्याज्ञावशवर्तिनस्ते भवेयुः। राजानमीश्वरमपि वा ते तृणाय मन्येरन्। अत एवोक्तं विशाखदत्तेन "निरीहाणामीशस्तृणमिव तिरस्कारविषयः" इति। अतस्सर्वैरप्यात्मगुणसम्पन्नैर्भवितव्यम्।

सत्यवादित्वं नाम कश्चिद्गुणो गुणान्तरेभ्यो भिद्यमानो गुणिनां गुणवत्तामाविष्करोति। सत्यवादी सर्वैः पूज्यते। अत एव औपनिषदी सरस्वती "सत्यं वद" 'धर्मं चरे" ति मुक्तकण्ठमुद्घोषयति। सत्यवचनेन कीर्तिप्रतिष्ठे लभ्येते। सापवादोऽपि पुरुषस्सत्यवादेन बन्धनान्मुच्यते। प्राणा अपि च रक्ष्यन्ते। सुखं च प्राप्यते।

पुरा हरिश्चन्द्रो नाम कश्चिद्राजा विश्वामित्राय यज्ञार्थं प्रभूतं धनं दातुं प्रतिज्ञातवान्। तदनु कदाचिन्मातङ्गकन्ये परिणेतुं विश्वामित्रेण वाञ्छितस्स राजर्षिः "अखिलमपि राज्यं दातुमिच्छामि, नैतदधर्मकार्यं कर्तुमङ्गीकरोमि" इत्युत्तरं ददत्, असत्यवादिनं राजानं कर्तुं यतमानाय गाधेयाय सर्वं राज्यं ददौ। गृहीतराज्यो विश्वामित्रो यज्ञार्थं प्रतिज्ञातं धनमर्थितवान्। पुनस्स राजर्षिः भार्यां स्वपुत्रं च विक्रीय महतः क्लेशाननुभूय, प्रतिश्रुतमर्थं प्रदाय सत्यसन्ध इति कीर्तिं लेभे। अपि च पुरा कश्चन व्याघ्रः कस्मिंश्चिदरण्ये तृणानि चरन्तीं गां दृष्ट्वा हन्तुमुद्यतः। गौश्च स्वतर्णकं प्रेक्षितुं पयो दातुं च तं घातुकमर्थितवती। अङ्गीकृतं च तद्वचनं तेन। गौश्च तत्क्षणं गृहान् गत्वा स्वतर्णकाय पयो दत्वा "व्याघ्राय आहारो भवामि। वत्सश्चायमविदितलोकः, रक्षतेमम्

इतीतराभ्यो गोभ्यो निवेद्य, स्ववत्साय नीतीरुपदिश्य व्याघ्रसमीपं जगाम। दयायत्तचित्तस्स व्याघ्रोऽपि सत्यवादिनीं तां गामभ्यमुञ्चत्। एवं कदाचित् प्राणा अपि रक्ष्यन्ते।

कृतज्ञतेत्यपरो गुणः, गुणानामुत्तमः उत्तमगुणैस्सर्वैं रभ्यर्थनीयश्च। कृतं जानातीति कृतज्ञः तस्य भावः कृतज्ञता। कृतज्ञता नाम परैः कृतस्योपकारस्याविस्मरणम् कृतज्ञतारहितः पुरुषः कृतघ्न इति व्यपदिश्यते। स चैवं निन्द्यते।

"मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातुकः।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरम्॥

अचेतनोपि कृतज्ञ एवमभिनन्द्यते—
प्रथमवयसि पीतं तोयमल्पं स्मरन्त-
श्शिरसि निहितभारा नारिकेला नराणाम्।
सलिलममृतकल्पं दद्युराजीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति॥

ततो जगत्यामस्यां कीर्तिप्रतिष्ठे लब्धुकामैस्सर्वैरपि मानवैर्धर्मसङ्ग्रहाख्यं कर्तव्यमवश्यकर्तव्यमिति शीर्षिकार्थः।

# तासां त्वं प्रभवो गिराम्

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।।"

इति चतुर्दश विद्यास्थानानि सुप्रसिद्धानि । तानि विज्ञानमपेक्षमाणेन मानवेनावश्यं वेदितव्यानि ।

"शिक्षा व्याकरणं छन्दो, निरुक्तं ज्यौतिषं तथा ।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ।।"

इति षडङ्गान्युपवर्णितानि । षडङ्गसहितानां चतुर्णां वेदानामध्ययनं विद्यार्थिभिरवश्यं कर्तव्यमिति वदन्ति मनीषिणः । अत एवोक्तं दण्डिना दशकुमारे—"षडङ्गसहितवेदसमुदायकोविदत्वमिति । इदानीं प्रयतामहे च वयं चतुर्णां वेदानां स्वरूपं सङ्ग्रहेण निरूपयितुम् । को नाम वेदः ? वेदो नाम छन्दोमयः, गानयोग्यः, गद्यमयश्च कश्चिद् ग्रन्थसमुदायः । अयमतीव प्राचीनतमः । विषयसौन्दर्येण भाषामाधुर्येण छन्दोबन्धनचातुर्येण च यौरोपवंशीयानां ग्रन्थानां शिरोरत्नायमानस्समुल्लसति । वेदशब्दो हि ज्ञानार्थकाद्विदधातोर्निष्पन्नः । ज्ञानोपदेशपरान् ग्रन्थान् निर्दिशन्, स एव शब्दः क्रमेण ग्रन्थविशेषे निरूढः पश्चाद्विशेषार्थवाची परिणतः ।

वेद्यते ज्ञायतेऽनेन धर्मस्वरूपमिति करणव्युत्पत्त्या योगरूढ्या च वेदशब्दो मन्त्रब्राह्मणाख्यं ग्रन्थराशिमभिधत्ते । 'वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदा इति बह्वृक्प्रातिशाख्यम् । सायणस्तु "अपौरुषेयं वाक्यं वेद" इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं, यो वेद स वेद' इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम् ।

प्रत्यक्षेणानुमित्या वा यत्रोपायो न बुध्यते ।
येन विन्दन्ति वेदेन तस्माद्वेदस्य वेदता ।।

"आम्नायः आगमः श्रुतिः वेद" इति सर्वे शब्दास्समानार्थकाः । सोऽयं वेदस्त्रयीति पदेन व्यवह्रियते । ऋग्यजुस्सामरूपत्वात् ऋग्यजुस्सामाख्यास्त्रय एव वेदाः पूर्वमासन् ।

"अग्नेः ऋचः, वायोर्यजूंषि सामादित्यात् ।" छा. ब्रा. ६-१७

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञं सिद्धार्थं ऋग्यजुस्सामलक्षणम् ।। मनु-१-१३

अतो "वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः" इति यदुक्तं तन्नाङ्गीकरणीयम् । ऋग्वेदेऽपि अथर्ववेद नामोल्लेखदर्शनात् । चत्वारो वेदास्साङ्गाः सरहस्या इति पस्पशाह्निके पतञ्जलिनापि स्पष्टमुक्तत्वात् । अथ कोऽयं त्रयीति व्यवहार इति चेत् वेदरचनायास्त्रिप्रकारकत्वात् । पद्यमयी गद्यमयी गानमयी चेति रचना त्रिधा दृश्यते । तस्मादृग्यजुस्सामाथर्वभेदेन चत्वारो वेदा अनादिसिद्धा इति सिद्धम् ।

पुरुषार्थचतुष्टयसम्पादनपरेण पुरुषेण वेदानामध्ययनमवश्यं कर्तव्यम् । पुरुषार्थचतुष्टयं नाम धर्मार्थकाममोक्षाः । वेदेन प्रयोजनमुद्दिश्य विधीयमानो अर्थो धर्मः । स च विधिनिषेधरूपः । "सत्यं वद" 'धर्मं चर' 'स्वाध्यायान्मा प्रमदः' इत्येवंरूपः, 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'विश्वजिता यजेत', इत्येवं रूपश्च । अर्थकामौ धर्मस्याङ्गे भवतः । अर्थकामसहितो धर्मश्च मोक्षस्याङ्गं भवति । वेदः, तद्विदां स्मृतिशीले च धर्मस्याङ्गं भवन्ति । अत एव महर्षिणा गौतमेनासूत्रितम् । "वेदो धर्ममूलम् । तद्विदां च स्मृतिशीले" इति ।

**ऋग्वेद :**

ऋच्यन्ते स्तूयन्ते देवता आभिरिति ऋचः देवतास्तुतिरूपाभिः ऋग्भिर्घटितत्वादयमृग्वेद इति कथ्यते । ऋग्वेदो नाम यागेषु पठनीयः स्तुतिरूपश्छन्दोमयो ग्रन्थः । अस्मिन्नद्योपलभ्यमानशाकलपाठानुसारेण सप्तदशोत्तरसहस्रं १०१७ सूक्तानि सन्ति । अष्टममण्डले खिलांशत्वेन समुपलभ्यमानानां वालखिल्यसूक्तानां योगे सूक्तसंख्या, अष्टाविंशत्युत्तर-सहस्रं १०२८ भविष्यति । एतानि सूक्तानि दशभिर्मण्डलैर्विभज्योपनि-बद्धानि । द्वितीयादारभ्यासप्तमं षण्मण्डलानि गोत्रमण्डलानीत्यभिधी-यन्ते । तानीमानि तत्तद्गोत्रीयैः पुरुषैरानुपूरुषं पृथगात्मतया चिरं परिरक्षितानि पश्चादेकीकृतानि । नवममण्डलं सोमयागविषयकैस्सूक्तैरेव घटितम् । अतस्सोममण्डलमिति कथ्यते । अत्र मन्त्राश्च सप्तषष्ट्युत्तर-चतुश्शताधिकदशसहस्रपरिमिता १०४६७ इति शाकलः । अशीत्युत्तर-पञ्चशताधिकदशसहस्रं १०५८० मन्त्रास्सन्तीति शौनकानुक्रमणी निर्दिशति । शब्दसंख्या च षड्विंशत्युत्तर-अष्टशताधिक-त्रिपञ्चाशते सहस्रोत्तर-लक्षपरिमिताः १५३८२६ शब्दास्सन्तीति, द्वात्रिंशत्सहस्रा-धिकचतुर्लक्षपरिमितानि ४३२००० अक्षराणि च सन्तीति वदन्ति । सर्वे मन्त्राश्च चतुर्दशसु च्छन्दस्सु विभक्ताश्च । ऋग्वेदपरिरक्षणे तैर्दर्शिता श्रद्धा काममभिनन्दनीया । पदपाठः, क्रमपाठः, जटापाठः घनपाठः, इत्येते वेदपरिरक्षणार्थं परिकल्पिता उपायाः ।

ऋग्वेदे स्तोत्रपात्रीकृतेषु बहुषु देवेषु वरुणोऽत्यन्तं प्रधानः । स च सर्वज्ञः । स च पक्षिणां डयनं, समुद्रे नावां चलनं, दूरगतेर्वायोः पन्थानं च जानाति । सर्वमुत्पन्नमुत्पत्स्यमानं वा रहस्यं वेत्ति । स च पापीयसो भृशं दण्डयति । धर्मोल्लङ्घ्यपि यश्शरणं प्रपद्यते तमसौ परित्यजति । अज्ञानादाज्ञावधीरिणमयमनुगृह्णाति ।

पञ्चानां सौरदेवतानां मध्ये मित्रः प्राचीनतमः । सूर्यः प्रधान-तमः । अयं देवानां चक्षुरित्यभिधीयते । मनुष्याणां पुण्यपापे पश्यति ।

सूर्येण प्रचोदिता मनुष्याः कर्माणि कुर्वन्ति । स्वाभीष्टं सम्पादयन्ति च । स च सप्तभिर्वाजिभिरुह्यमानेन रथेन याति । सर्वे प्राणिनस्तेन जीवन्तीति हेतोः, स सर्वकर्तेत्युच्यते । सविता नाम काचित्सौरदेवता । अयं मायाविनो राक्षसान् दिगन्तरं प्रापयति । दुस्स्वप्नान् दूरीकरोति । देवानाममृतत्वं, मनुष्याणां दीर्घायुष्यं च विधत्ते । इन्द्रवरुणप्रभृतयो देवाश्च, तस्य स्वतन्त्रतां शासनं च निरोद्धुं नेशते । ऋग्वेदीयः कश्चिन्मन्त्रः, सवितारमुद्दिश्य प्रवृत्तः । स च मन्त्रोऽद्यापि भारतीयैस्सन्ध्योपास्तौ नियमेनोच्चार्यते, योऽयं प्रतिपाद्यदेवतानुरोधात् सावित्रीति, छन्दोनुरोधाद् गायत्रीति चोच्यते ।

स चायं मन्त्रः--

"तत्सवितुर्वरेण्यं । भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ।"

अन्यो देवः पूषा (पोषकः) स चाविपालानां मुख्यो देवः । अयमजैरुह्यमानं रथमारोहति । इह लोके मनुष्यान् मृगांश्च रक्षन् परलोके पितृलोकगामिनां पन्थानं दर्शयन् परमोपकारी भवति । अपरा, सौरदेवता विष्णुः । अप्रधानोऽप्ययं, अद्यत्वे भारतीयैस्सर्वोन्नतं पदमारोपितः । त्रेधा पदन्यासश्चास्य प्रधानः कर्मविशेषः । ब्राह्मणग्रन्थेष्वेवमुपाख्यायते--"विष्णुर्वामनरूपेण त्रेधा पदं निदधानः, राक्षसापहृतां महीमुन्मोचयितुमवतीर्ण इति । अस्य परोपकारशीलता पौराणिकीषु कथासु बहुधोपवर्णिता ।

उषाः केवलमेका स्त्रीदेवता । ऋषिभिरियं बहुधा स्तुता । अस्याश्शोभया समावर्जितमनसो महर्षयस्तां बहुधा स्तुवन्ति स्म । स्तूयमानौ यमलरूपावश्विनौ । तौ दिवः पुत्रौ नित्ययौवनौ, सुन्दरौ, च । तौ लोकान् शोकाद्विमोचयतः । जनान्नावा समुद्रादुत्तारयतः । प्रकृत्या तौ दिविजौ भिषजौ । अन्धाननन्धान् पङ्गूनपङ्गूंश्च कुरुतः ।

देवानामिन्द्रः प्रधानतमः। अयं वृत्रहा इत्यभिधीयते। अयं समरप्रियो देवः। अयमार्यवर्णानामुन्नमयिता, कृष्णवर्णानामवनमयिता च। नानाविधान्यधर्म्याणि कर्माण्ययमाचरन् स्तूयते। अयं सोमरसं पिबति। निजानुजाया उषसो रथं भञ्जयति। आत्मनः पितरं हन्ति। पृथिवीस्थानानां देवानां मध्ये, अग्निः प्रधानतमः। यज्ञेषु दीयमानं हविर्देवान्नयति। अयं प्रतिगृहं प्रतिवसति। बहुत्र दीयमानोऽप्ययमेक एव। सर्वे देवास्तस्मिन्नेव निलीनाः। अग्निरयमनश्वरो भवति। स च नश्वराणां मध्ये स्वस्थानमकल्पयत्। मर्त्यानां गृहमागतमेनं अतिथिरित्याहुः। अयं गृहपतिरित्यपि व्यवह्रियते। एवं प्रधानानप्रधानांश्च बहून् देवान् स्तुवन्नयमृग्वेदोऽन्वर्थाभिधानो भवति। संहिताभागं, ब्राह्मणानि आरण्यकानि, उपनिषदश्चेत्यस्य चत्वारो भागास्सन्ति। संहिताभागे देवा स्तूयन्ते। ऋचां व्याख्यानरूपाणि ब्राह्मणानि। ब्रह्म वेदः, तत्सम्बन्धीनि ब्राह्मणानि। विविक्तत्वादरण्ये पठितव्या मन्त्रा आरण्यकानि। ब्रह्मस्वरूपनिरूपणपराः आख्यानरूपाः तत्त्वविद्याबोधने कृतप्रयत्ना वैदिककालस्य परमदशायामुत्पन्ना मन्त्राः उपनिषद इत्युच्यन्ते।

**सामवेदः**

उद्गात्रा विलक्षणेन स्वरेण, उद्गीयमानो ऋङ्मन्त्रराशिरेव सामवेदः। सामशब्दो गानार्थेऽपि शक्तः। पञ्चसप्ततिं मन्त्रान्विहाय सर्वे मन्त्रा अत्र ऋग्वेदादुद्धृता एव। प्रायेणाष्टममण्डलात्, सोमयागविषयकान्नवममण्डलाच्च मन्त्रास्समुद्धृताः। सामवेदमन्त्राणां सन्ति सप्त स्वराः। तेषामेव ऋङ्मन्त्राणां त्रय एव स्वराः। सामवेदेऽस्मिन् एकोनपञ्चाशदुत्तरपञ्चशताधिकसहस्रं १५४९ सूक्तानि सन्ति। तानि आर्चिकाख्ये विभागद्वये विभज्य विन्यस्तानि। आर्चिकं नाम ऋचां समूहः। आर्चिकं च प्रपाठकाख्यैरवान्तरविभागैस्सहितम्। पूर्वार्चिकं छन्दः छन्दसी छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते। आग्नेयपर्व, ऐन्द्रपर्व, पवमानपर्व, आरण्यपर्वेति नामभिश्चतुर्षु भागेषु विभज्यते। पूर्वार्चिकं विषयानुसारम्। उत्तरार्चिकं त्वनुष्ठाननिर्देशकम्।

तस्य बहवो विभागाः– दशरात्रं, संवत्सरं, ऐकाहं, अहीनं, सत्रं, प्राय श्चित्तं, क्षुद्रं चेत्यादयस्तत्र भेदाः ।

सामवेदस्य कौथुम-राणायनीयाख्यं शाखाद्वयमिदानीमुपल भ्यते ।

**यजुर्वेद :**

यजुश्शब्दोऽयं यजधातोर्निष्पन्नः । अतोऽयं यज्ञक्रियाविषयकः । सामवेद इवायं वेदोऽपि ऋङ्मन्त्रघटितः । अस्मिन् वेदे गद्यप्रस्थानमिदं-प्रथमतया उपक्रान्तं दृश्यते । सामवेद इवात्रापि यज्ञक्रियानुरोधेन मन्त्रा व्यवस्थापिताः । यजुर्वेदस्य बहवश्शाखास्सन्ति । तत्रादिमा कठशाखा । तस्या एव काप्युपशाखा कपिष्ठलाख्या । अपरा मैत्रायणीयशाखा । अस्या एव नामान्तरं कालापशाखेति । इदं शाखाद्वयं भारते सर्वत्रापि लब्धप्रचारमभूत् यतस्तत्रभवान् पतञ्जलिः काठकं कालापकं च ग्रामे ग्रामे प्रोच्यमानं विश्वतश्श्रूयमाणं चाह । तैत्तिरीय-वाजसनेयसमाख्ये द्वे शाखे अपि प्रसिद्धे, याभ्यां कठकालापकशाखे अधःकृते अभूताम् ।

अयं, कृष्णयजुर्वेदशुक्लयजुर्वेद इति द्विविधः । तैत्तिरीयादि-संहितात्रये मन्त्रार्थवादभागा इव, ब्राह्मणभागा अपि संहितायामेव सङ्कलिताः । एवं विषयसाङ्कर्येण ते शिष्याणां व्यामोहं जनयन्ति । अतोऽयं कृष्णयजुर्वेद इति कथ्यते । वाजसनेयसंहितायां यज्ञक्रियासु पठितव्या मन्त्रा अर्थवादाश्च परं निबद्धाः, न तु ब्राह्मणभागाः । ते तु पृथगेव ब्राह्मणग्रन्थे सङ्कलिताः । इत्थं विषयविभागेन शिष्यबुद्धिवैश-द्यापादकत्वात् अयं शुक्लयजुर्वेद इत्यभिधीयते ।

यजुर्वेदस्यास्य-द्विप्रकारत्वं पौराणिका एवं कथयन्ति । व्यासो वैशम्पायनाय वेदं प्रोवाच । स स्वशिष्याय याज्ञवल्क्याय । कुतोऽपि कारणात् रुष्टो वैशम्पायनो याज्ञवल्क्यमुवाच देहि मदधीतं वेद' मिति

याज्ञवल्क्यो गुरुवचनपालनाय ततोऽधीतं वेदं सद्यो वान्तवान्। अन्ये वैशम्पायनशिष्याः तित्तिरिरूपं धृत्वा याज्ञवल्क्येन वान्तं वेदं गृहीतवन्तः। स एवायं वान्तगृहीतो वेदः कृष्णयजुर्वेदः।

वैशम्पायने कुपिते, ततोऽधीतं वेदं विसृज्य याज्ञवल्क्यः पुनर्वेदाधिगतये सूर्यमाराधयामास। ततश्च वेदमाप। ततोऽयं वेदश्शुक्लयजुर्नाम्ना अप्रथत। अनयोर्वेदयोर्महदन्तरम्।

**अथर्ववेदः**

अभिचारक्रियाणां प्राधान्येन प्रतिपादकोऽयं वेदोऽथर्ववेदः। अथर्वनाम्ना ऋषिणा दृष्टत्वादयमथर्ववेद इत्यभिधीयते। अस्मिन्विंशतिः काण्डा विद्यन्ते। अत्र, एकत्रिंशदुत्तरसप्तशतं ७३० सूक्तानि, सप्ताशीत्युत्तरनवशताधिकपञ्चसहस्रं ५९८७ मन्त्राश्च विद्यन्ते। द्विशतोत्तरसहस्रं १२०० ऋग्वेदीयमन्त्रा अपि सन्ति। अथर्ववेदस्य नवशाखा आसन्। शौनकपिप्पलादसमाख्ये द्वे एव शाखे इदानीमुपलभ्येते।

अथर्ववेदोऽयमृग्वेदापेक्षया बलवत्तरान्धविश्वासघटितः। रक्षःपिशाचाद्यस्तित्वाभिमानकलुषाः प्राकृतजनोचिताः वासनाविशेषा अत्र समुपस्थाप्यन्ते न तु मतधर्मविषयकाः प्रत्ययविशेषाः। अत्रेतरसंहितापेक्षया, ईश्वरास्तित्ववादरसविशेषमुद्भावितः। महाभाष्यकाले त्वयं वेदः परां प्रतिष्ठामुपगतः। अत एव भगवान् पतञ्जलिः, अमुं वेदं प्रथमवेदत्वेनोदाहरति। "अथर्वादिर्वेद" इति चाह। अथर्वाङ्गिरस इत्यप्यस्य नामान्तरम्। आदितो वर्तमानोऽप्ययं वेदः प्रतिपाद्यविषयस्वभाववैलक्षण्येन बहोः कालादनन्तरमेव वेदत्वेन प्रतिपन्नः। अभिचारक्रियासम्बन्धात् यज्ञियवेदेष्वस्य परिग्रहो नाभूदिति केचिदभ्यूहन्ति।

ऋग्वेदीये पुरुषसूक्ते ऋग्यजुस्साम्नामेव नामानि निर्दिष्टानि। ऋग्वेदब्राह्मणेष्वथर्ववेदस्य नामापि नास्ति। शतपथब्राह्मणे, अथर्ववेदस्य न केवलं वेदत्वं किन्तु वेदानामाद्यत्वं च निरूपितं भवति। एवमथर्ववेद आभिचारिकक्रियासम्बन्धात् त्रयीतो भिद्यमानो दूरत एवावर्तिष्ट। अन्ततस्तस्यापि प्राधान्यमङ्गीकृतम्। अतश्चत्वारो वेदा इति सिद्धम्।

कविकुलगुरुः कालिदासो वेदानधिकृत्य स्वाभिप्रायमेवमाविरकरोत्।

उद्घातः प्रणवो यासां, न्यायैस्त्रिभिरुदीरणम्।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम्॥

कुमा–२–१४

# कुलपतेः परिचयः

परश्शतशिष्यजनसंसेवितपादपद्मस्य, उत्तमगुरुपूजाधुरन्धरस्य, सकलविद्यासङ्केतस्थानस्य, रामचन्द्रपादारविन्दमरन्दास्वादनमत्त-मिलिन्दस्य, आश्रितजनकल्पपादपस्य, वदान्यशेखरस्य, भारद्वाजवंशपयः पाराबारराकासुधाकरस्य लक्ष्मीनृसिंहदम्पतीगर्भशुक्तिमुक्ताफलस्य सरसकाव्यनिर्माणमार्मिकस्य, अनवद्यहृद्यगद्यरचनाचतुरस्य सकलसद्गुण-सम्पन्नस्य, स्वप्रभावोपात्तकलाशालाध्यक्ष्यस्य, पदवाक्यप्रमाणपारावार पारीणस्य विद्यालयप्रतिष्ठापकस्य देवालयसमुद्धारकस्य, वैद्यालय-सहायकस्य, अनेकलोकोपकारक-संस्थाविशिष्टसभ्यस्य अनेकविश्व-विद्यालयसम्मानितस्य कूलङ्कषप्रज्ञाशालिनः, अभ्रङ्कषयशोविशालस्य सदयहृदयस्य, सहृदयस्य महोपाध्यायस्य वाणीवल्लभस्य लक्ष्मीपतेः कुलपतेः कलाप्रपूर्णस्य श्रीमतो वरदाचार्यमहोदयस्य परिचय इदानीं मया क्रियते ।

श्रीमान् वरदाचार्यमहोदयः चिट्टिगूडूरुग्रामे नन्दनसंवत्सर-श्रावणशुद्धदशम्यां अनूराधानक्षत्रे (१८९२ तमे वर्षे) भुवमवतीर्ण-वान् अयं स्वबाल्ये भागवतोत्तमात्, ऋषिसत्तमात् नीति-वित्तमात् स्वमातुलात् वेङ्कटरङ्गरामानुजाचार्यात् संस्कृतभाषायां प्रथमपरिचयं लब्धवान् । तदनु, ज्योतिर्विदाभरणात् सकलकला-निपुणात् पण्डिताग्रेसरात् श्रीमतस्ताण्डवकृष्णमाचार्यात् काव्यनाट-कादिसाहित्यविज्ञानं समुपार्जितवान् । मचिलीपत्तनस्थनोबुल्कला-शालायां, उत्तमपाण्डितीं वहद्भ्यो महद्भ्यो गुरुभ्यो विज्ञानातिशयं सम्पादितवान् ।

ततः परं स मद्रपुरीं ययौ । तत्र प्रेसिडेन्सीकलाशालायां दर्शनसार्वभौमानां पदवाक्यप्रमाणपारावारपारीणानां, महामहोपाध्या-

यानां, से. कुप्पुस्वामिशास्त्रिमहोदयानां सन्निधौ महाविदुषां मण्डयन् रङ्गाचार्याणां सविधे च, निर्विरामं शास्त्रेषु कृतभूरिपरिश्रमः, M. A. (Hons.) परीक्षायां प्रथमश्रेण्यां उत्तीर्णो भूत्वा पारितोषिकतया हैमं भूषणं लेभे ।

"नवपरिमलगन्धः केन शक्यो वरीतुम्" इतीदमाभाणकं न वितथम् । विद्यार्थिदशायामेव वदान्यतागुणो वरदं वव्रे । दक्षिणाफ्रिकायां प्रवृत्ते भारतीयसत्याग्रहे, मद्रपुर्यां सम्पिपादयिषिताय द्रव्यनिधये पञ्चशतं रूप्यकाणि दत्तवानयमिति विश्रुतासीदान्ध्रमण्डले । तदनु निजषष्टयब्दपूर्तौ पञ्चदशसहस्रं रूप्यकाणि विद्यालयेभ्यो वितीर्णानि । दत्त नि देवालयेभ्यो वैद्यालयेभ्यश्च बहूनि रूप्यकाणां सहस्राणि । विद्वद्भ्यो विद्यार्थिभ्यश्च प्रभूतं धनं दत्तम् । कियन्तंचित्कालं विद्यार्थिनां मज्जनभोजनादिकं स्वमन्दिर एवाकारयत् । एवं दानशौण्ड इति ख्यातिमवाप ।

उपात्तविद्यो वरदाचार्यः देशसेवां कर्तुकामः, स्वयमेव तदानीं सुप्रसिद्धैः कीर्तिशेषैः कोपल्ले हनुमन्तरायैः प्रतिष्ठापितायां आन्ध्रजातीयकलाशालायां आत्मानं निर्वेतनिकं पण्डितं नियोजयामास । गच्छता कालेन तत्र कञ्चन वैतनिकं पण्डितं स्वद्रविणदानेन नियुज्य, विजयनगरमहाराजैराकारितः,महाराजसंस्कृतकलाशालायां, उपाध्यक्षपदवीं लब्धवानयं लब्धवर्णः । तत्र, आङ्ग्लसंस्कृतकलाशालयोरुभयोरप्यध्यक्षः मनस्वी मनीषी महात्मा सरस्वत्यपरावतारः, रामावतारमहोदयः, वयसाल्पमपि ज्ञानेन वृद्धं प्रगल्भवाचं परिणतप्रज्ञं विज्ञाननिधिं वरदं विलोक्य बहुधा सम्मानयामास । अनेन क्रियमाणां सेवामभिनन्दितवांश्च । उपाध्यक्षो भवन्नयं उपाध्यायानां विद्यार्थिनां च सन्तोषाय, उपयोगीनि बहूनि कार्याणि कुर्वन् स्वकीयं कार्याचरणसामर्थ्यं प्राचकटत् ।

तत्र बहुग्रन्थप्रणयिनां विमर्शकाग्रेसराणां अपरपतञ्जलीनां, महामहोपाध्यायानां, कलाप्रपूर्णानां तातासुब्बाराय शास्त्रिमहोदयानां,

अपरगौतमानां सङ्गमेश्वरशास्त्रिणां, इतरेषां विद्वत्प्रवराणां च साहचर्यं समासादितम्। बहुषु शास्त्रेषु भूरिपरिश्रमाय लब्धो महानवकाशः। महोपाध्याय इति बिरुदं च लेभे। सर्वासु दिशासु व्याप्नुतां चास्य कीर्तिप्रतिष्ठे। सम्पादिताश्च बहवश्शिष्या अप्रतिमप्रतिभा गुणवन्तो विनयरुचयो विज्ञाननिधयश्च।

तदनन्तरं मद्रराष्ट्रसंस्कृतविद्यालयपर्यवेक्षक Superintendent पदवीनिर्वहणाय तदानीन्तनप्रभुत्वपक्षात् आकरणां प्राप्य मद्रपुरीं ययौ। तस्मिन्नवसरे मद्रराष्ट्रीयाणां संस्कृतकलाशालानां संस्कृतपाठशालानां च परिपालनाधिकारो हस्तगतो बभूवास्य यूनो दक्षस्य गैर्वाणीवल्लभस्य। अस्य परिपालने बहवो विद्यालया स्थापिताः। स्थापितपूर्वाणां विद्यालयानां समुचितं साहाय्यं दत्तम्। बहुषु स्थलेषु विद्यार्थिनामुपाध्यायानां परिपालकानां चाविरोधस्सम्पादितः। संस्कृतभाषा च यथा सर्वत्र व्याप्तिं प्राप्नोति तथा प्रयत्नाः कृताः। न केवलमियं ब्राह्मणानां भाषा, किन्तु भारतीयानां भाषेति प्रवादस्समजन्यस्य परिपालने। अनया पदव्या श्रीमान् वरदाचार्यः, श्रीमता वरदाचार्येण पदवीचेयं शोभत इति लोकवादस्संवृत्तः।

अत्रान्तरे "श्रेयांसि लब्धुमसुखानि विनान्तरायैः"(किरा. ५-४९) इति न्यायेन तत्पदवीस्थितिरस्य दुष्करा संवृत्ता। जातिपितुः, यशसा सुगन्धेः महात्मनो गान्धेः 'परित्यजत पदवीः" "मा कुरुत साहाय्यं प्रभुत्वरस्य" इत्यादीन्निनादान्निशम्य बहवो जनास्स्वस्वपदवीः पर्यत्यजन्। अयमपि प्रियमुपदिशतामधिकारिणां वचनानि धिक्कुर्वन् महतीमपि स्वपदवी परितत्याज। "अथवा भवितव्यता बलवती" (शाकुं-६)

सद्य एवायं कोव्वूरुग्रामस्थिते आन्ध्रगीर्वाणविद्यापीठे विनैव वेतनं अध्यक्षपदवीं परिजग्राह। विजयनगरादागतैशिष्यैरुपाध्यायै स्सहितः, कोव्वूरुग्रामे निवसन् शिष्यानुपदिशन्, मान्यान् मानयन्

प्रियहितानि कार्याणि कुर्वन्, मित्राणि रञ्जयन् अन्तरायात् भञ्जयन् उत्तमभावान् व्यञ्जयन्—गोदावरीतीरे सुखं वत्सरमुवास ।

कालः करालः श्वपुच्छमिव कुटिलश्च । ऋजुस्सन्न तिष्ठति । परिपालकवर्गस्य, अस्य च वैमत्यात् इयं पदव्यपि, अनतिचिरादेव परित्यक्तव्या आसीत् । तदानीमयं किङ्कर्तव्यताविमूढ आसीत् । स्वाश्रितानां विषये का गतिरिति चाचिन्तयत् । "मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन" (रामा युद्ध. १८ स.) इति कविकोकिलस्य वाल्मीकेरुक्तिः, स्मृतिपथमाजगाम । "स्वाश्रितरक्षणं हि परमो धर्मः, इत्यात्मन्यमन्यत । अल्पयैव कालकलया, अस्य मनसि शोभना मतिरुदियाय । मया खलु कलाशाला स्थापनीया । आश्रितानां रक्षणमवश्यं कर्तव्यम् अन्यथा, एते निराश्रयास्स्युः । सत्योऽयं प्रवादः, यत् "निराश्रया न शोभन्ते पण्डिता वनिता लताः" इति ।

भाविविद्यार्थिनामदृष्टवशात्, आत्मनः पूर्वजानां पुराकृतसुकृतपरिपाकवशाच्च चिट्टिगूडूरुग्रामे स्वपितुः सुगृहीतनामधेयस्य नरसिंहाचार्यस्य नाम्ना संस्कृतकलाशाला काचन २७-७-१९२३ तारिकायां स्थापिता । उपदेशपटवः उदारमतयः, उरुयशोविशालाः पण्डितप्रकाण्डास्तत्र नियुक्ताः । आन्ध्रप्रदेशस्य चतुरन्तेभ्यो ग्रहणधारणपटवो विनयशालिनो विद्यार्थिनस्समागताः, यैः कलाशालायाः कीर्तिस्तथावर्धत, यथास्याः गुरुकुलमिति प्रथा तदधिपतेश्च कुलपतिरिति बिरुदं च विख्याते अभूताम् । विद्यार्थिनां चिरेण मज्जनभोजनादिकं वसतिश्च स्वगृह एव कल्पिते । अपत्यनिर्विशेषं वर्धितास्ते श्रीमतामपारकृपारसभाजनमभूवन् । प्रभुत्वसाहाय्येन केषाञ्चिद्दातॄणां साहाय्येन, आत्मनो वितरणेन च कलाशाला सुस्थिरामभिवृद्धिं नीता । तदभिवृद्धौ स्वमातुलः स्वविमाता च हेतुरिति स्वयमेव प्रोक्तम् । स्वविमातुः स्मारकचिह्नं विद्यार्थिनां निवासगृहं निर्मितम् । अत्र, उपात्तविद्या विद्यार्थिनः प्राथमिकपाठशालामारभ्य, आविश्वविद्यालयं बहुषु विद्यासंस्थासु नियुक्ताः, गैर्वाणीमान्ध्रभाषां च बोधयन्तः, कला-

शालायाः, कुलपतेः स्वेषां च कीर्ति दिक्षु वर्धयन्ति । प्रभूतं वित्तमार्जयन्तः स्वकुटुम्बपोषणं कुर्वन्ति । एवं बहूनां कुटुम्बानां पोषकताहेतुत्वं कुलपतौ समुल्लिख्यते सहृदयैः ।

१९५३ तमे वर्षे, कुलपतेष्षष्टयब्दपूर्तिमहोत्सवः,—कलाशालायां रजतोत्सवश्च महता हर्षेण शिष्यवर्गेण निर्व्यूढौ । यत्र भूतपूर्वा विद्यार्थिनः अधिकारिणः विख्याताः पण्डिताश्च सममिलन । समीचीनान् स्वाभिप्रायांश्च प्रकट्यकार्षुः ।

तत्रभवान् रामावतार इवायमपि बहुमुखप्रज्ञाशाल्यनेककार्यकर्ता च । १९४९ तमे वर्षे जीर्णां लुप्तप्रायां नाममात्रावशिष्टां, आन्ध्रजातीयकलाशालां महता प्रयासेन समुद्धृतवान् । भिन्नाभिप्रायैः नानाविधैस्सभ्यैस्सह संवृत्ते महति कोलाहले चाणक्यमतिविभवं स्मारयता स्वमतिविभवेन सर्वासां समस्यानां परिष्कारं कृत्वा बहूनां कलानां शास्त्राणां च निलयमान्ध्रजातीयकलाशालां पुनर्निर्ममौ । तस्यामष्टौ वर्षाण्यध्यक्षपदवीं निर्व्यूढवान् । इदमत्रावधेयं यत्--रामावतारमहोदय इवायमपि, उभयोः कलाशालयोरध्यक्षो बभुव । संस्कृतभाषाभिज्ञ आङ्गलकलाशालायाः अधिपतिरिति यत् निम्नाभिमुखस्य पयसः प्रतीपगमनमेवेति न विस्मरणीयम् ।

विना विरामं पञ्चपञ्चाशद्वत्सरा अस्य सेवासमयः इत्यपि समुल्लेख्यः कश्चिद्विशेषः । सर्वदापि संस्कृतसेवैवास्य परमं लक्ष्यम् । "संस्कृतसेवैकजीवितप्रयोजनोऽहमिति बहुशः प्रकटितमाचरणेन निरूपितं च । सुगुणाभरणस्य भद्राचलाभरणस्य जानकीरमणस्य रामचन्द्रस्य, आलयोद्धरण।दिकं स्वार्थरहितया भक्त्या विरच्य प्रकटीकृतमनेनात्मनो रामदासदासत्वं चरमावधिदासत्वं च चन्द्रमौलेस्साहचर्येण । लक्ष्मीस्सरस्वती च स्वीयं निसर्गभिन्नास्पदत्वं परित्यज्य गुणिनं सहृदयं मनोषिणमुदारं चामुं सर्वदा समाराधयतः ।

सरस्वतीसमाराधनतत्परमेतं, कविताकन्या स्वयमेव वव्रे । सप्तविंशतिश्लोकात्मकं तत्त्वकथनं कथनं विनैव गीर्वाणवाण्या रत्नाभर-

मिति श्लाघ्यते । भारतीयेतिवृत्तमभिदधति "सुषुप्तिवृत्ते" सर्गत्रयात्मके, वैदर्भीवल्लभस्य कालिदासस्य रीतिमुत्पश्यन्तो गुरवोऽप्यसीमानमानन्दमनुबभूवुः। कुलपतेः कविता कविकुलगुरोः कालिदासस्य कवितेव सरसा, सरला, सगुणा, सुगमा, सुलभा, सुभगा, सालङ्कारा च । चतुस्सर्गात्मके सत्यविजये, उपर्युक्तो भावस्सहृदयैरभिव्यञ्जितः । अनेन रचितं प्रास्ताविककदम्बकम् । सदयहृदयानां सहृदयानां हृदयानि रञ्जयति । अनेनान्ध्रभाषायां, सुप्रसिद्धानि, कृष्ण, वेमन, सुमति, भास्कर, दाशरथि नरसिंह, काळहस्तीश्वर, आन्ध्रनायकशतकानि, संस्कृतभाषायां रमणीयया शैल्या नन्वनूदितानि । गायत्रीनीतिगीतावलेस्संस्कृतानुवादो न कस्य विस्मयमुत्पादयति? गैर्वाण्या आन्ध्रानुवादो दृष्टपूर्वः आन्ध्रया गैर्वाण्यनुवादो न दृष्टपूर्वो नापि श्रुतपूर्वश्च। अतोऽयं संस्कृतानुवादस्सर्वान् विस्मितान् सस्मितांश्चाकरोत्। आन्ध्रप्रदेश साहित्य अकाडमीसभ्याः आन्ध्रसाहित्यस्थ संस्कृतानुवादेन सन्तुष्टाः, शतकसप्तकं प्रकाशितवन्तः । उक्तसभाया विशिष्टसभ्यतां च दत्तवन्तः । अनूदितान्यान्ध्रशतकानि, भारतवर्षस्य सर्वेषु कोणेषु इतरदेशेषु च विशेषविदुषां विदुषां स्तोत्रपात्राण्यभूवन् । न केवलमयं हृद्यानां पद्यानां रचनायामेव पटिष्ठः किन्तु अनवद्यस्य गद्यस्य रचनायामपि । भाषाशास्त्रसङ्ग्रहोऽस्मिन्विषये परममुदाहरणम् ।

प्रियशिष्याणामुत्तमगुरूणां, अध्ययनाध्यापनाचरणप्रचारणनिपुणानां, विश्वश्रेयःकामुकानां, श्रीमतां वरदाचार्याणां कृते, आन्ध्रविश्वविद्यालयेन वितीर्णं कलाप्रपूर्णबिरुदं, एतेषां बहुमुखप्रज्ञां भाषासेवां जनानुरागं च व्यञ्जयति । रसिकमनांसि रञ्जयति । योग्यतमाय दत्तं बिरुदं स्वस्य महत्तां प्रकटयत् बिरुदधारिणं प्रकाशयति चेति शम् ॥

# शास्त्रिमहोदयः

श्री दुव्वूरिवंशपयःपारावारराकासुधाकरश्श्रीवेङ्कटरमणशास्त्रिमहोदयस्सुप्रसिद्ध आन्ध्रपण्डितः। अप्रतिमप्रतिभो रचयिता। अखण्डपाण्डित्यमण्डितानां गुरुवरेण्यानां प्रियशिष्यः। प्रतिभावतामान्ध्रपण्डितप्रकाण्डानां बहूनां प्रीतिकरो गुरुः। मृदुमधुरमनोहरभाव-भावनावासितान्तःकरणस्सहृदयशिरोमणिः। सुरुचिरमतिवैभवचुलुकी-कृतान्ध्रव्याकरणवारांनिधिस्सुधीतल्लजः। परेङ्गितज्ञो रसज्ञः। परिणतप्रज्ञो विशेषज्ञश्च।

अयं गोदावरीमण्डलान्तर्गतस्य दक्षारामस्य निकटवर्तिन्यां मसकपल्ल्यां विलम्बिसंवत्सरे वैशाखशुद्धपञ्चम्यां (२५-५-१८९८) भुवमवतीर्णवान्। अत्रायमवधेयो विशेषो यत् जगद्गुरोश्शङ्करस्य रामानुजस्य च जन्मतिथिरप्येष एवेति यादृच्छिको विशेषः।

अयं बाल्ये स्वपितामहस्य सन्निधौ काव्यनाटकादिसाहित्यग्रन्थेषु भूरिपरिश्रमं कृतवान्। तदनु तदानीं विद्याविहारपदवीति विश्रुतायां पीठिकापुर्यां सुप्रसिद्धवैयाकरणानां वेदुल सूर्यनारायणशास्त्रिणां सन्निधौ संस्कृतव्याकरणाध्ययनमकरोत्। यदा मद्रपुरीविश्वविद्यालये प्राच्यबिरुदपरीक्षा आरभ्यन्त, तदायं विद्यानगरं विजयनगरं गत्वा, श्रीमन्महाराज-संस्कृतकलाशालायां "विद्वान्" परीक्षार्थं संस्कृतान्ध्रग्रन्थेषु निरन्तरं निर्विरामं निरुपमं च कृषिमकरोत्।

तत्र गुरुप्रसादाद्यनेकग्रन्थकर्तृणां, महामहोपाध्यायानां, कलाप्रपूर्णानामपरपतञ्जलीनां तातोपनामक, श्री सुब्बारायशास्त्रिणां सन्निधौ पाणिनीयव्याकरणमध्यगीष्ट। संस्कृतभाषासेवैकजीवितप्रयोजनानाँ,

कुलपतीनां, कलाप्रपूर्णानां, महोपाध्यायानां, श्रीमतां S.T.G. वरदाचार्याणां सन्निधौ काव्यनाटकादिसाहित्यं विज्ञातवान्। विमर्शकाग्रेसराणां विज्ञाननिधीनां कलाप्रपूर्णानां श्री वज्झल चिनसीतारामस्वामिशास्त्रिणां सन्निधौ, आन्ध्रव्याकरणमान्ध्रप्रबन्धांश्चायमधीतवान्। उत्तमानां गुरूणां सन्निधौ सम्यगध्ययनेन, अप्रधृष्यं वैदुष्यं सम्पाद्य, शास्त्रिमहोदयोऽयं मद्रपुरीविश्वविद्यालये, "विद्वान्" परीक्षायां प्रथमश्रेण्यामुत्तीर्णवान्।

तदनु तस्यामेव विजयनगर-संस्कृतकलाशालायां १९१८-२२ पर्यन्तं चतुरो वत्सरान् अध्यष्ठीयतानेन संस्कृतान्ध्राध्यापकपदवी। मातृसंस्थायामेवाध्यापकपदवीलाभो न केवलं पाठप्रवचनपाटवस्य, किन्त्वसदृशवैदुष्यस्यापि प्रत्यायको हेतुः। ततो गोदावरीपश्चिमतीरस्थे कोव्वूरुग्रामे, आन्ध्रगीर्वाणविद्यापीठे वर्षमेकमध्यापकपदवीमधिष्ठितवान्। अनन्तरं १९२३ तमवत्सरादारभ्य १९४१ तमवत्सरपर्यन्तं, अष्टादशवत्सरान् कृष्णामण्डलान्तर्गते, मचिलीपत्तनसमीपस्थे चिट्टिगूडूरुग्रामे श्रीनारसिंहसंस्कृतकलाशालायां प्रधानान्ध्राध्यापकपदवीमधिष्ठाय, सुमेधसां तत्कलाशालाध्यक्षाणां S.T.G. वरदाचार्याणां, अपरिमितादरस्य, प्राज्ञताकलितानां भाषाप्रवीणशिष्याणामपारगौरवस्य चायं भाजनमभवत्।

ततः परं, एकचत्वारिंशदुत्तरैकोनविंशतिशततमे वत्सरे (१९४१) प्राप्ते च गुरूणां विश्रामसमये, आन्ध्रविश्वकलापरिषदि, आन्ध्रशाखायां पण्डितपदवीमधिष्ठाय स्वगुरुस्थानस्य सुषमामजनयत्। तत्र परिणतबुद्धीन् विनयविनम्रान् बहून् प्रियशिष्यान्, आन्ध्रव्याकरणमध्याप्य, तान्सर्वानपि समर्थान् M.A. बिरुदाङ्कितानकरोत्। अस्यामेवान्ध्रविश्वकलापरिषद्यात्मीयानां प्रियशिष्याणामभिवन्दनैः, गुणग्राहिणामधिकारिणामभिनन्दनैश्च त्रयोविंशतिं वत्सरान्, आत्मनोऽध्यापकपदवीं यथाखिलतृप्ति निरुह्य १९६३ तमे वर्षे श्रीशास्त्रिमहोदयो विश्रान्तिं गृहीतवान्।

एतेषु पञ्चचत्वारिंशद्वत्सरेषु संवृत्तायां सेवायां, अनेन सम्पादितेषु शिष्येषु पञ्चाशदधिकशतं, भाषाप्रवीणपण्डिताः, चत्वारिंशदुत्तरशतं M. A. पट्टभद्राश्चेत्याहत्य त्रिशतं विद्यापुत्राः, रचयितारो वक्तारो विमर्शकाः पण्डिता उपन्यासका अध्यापकाः प्राध्यापकाश्च भूत्वा, स्वेषु स्वेषु स्थानेषु ख्यातिं विन्दन्ति स्म। एवंविधान् शिष्यान्विलोक्य, "शिष्यसम्पदस्तुल्या न कापि सम्पदिति सिद्धान्तं मनसिकृत्य, तत्सम्पदं लब्ध्वा संतृप्तिमापन्नशिशिष्यवात्सल्यमूर्तिश्श्री शास्त्रिमहोदयः।

पञ्चत्रिंशद्वत्सरानभिव्याप्य ग्रन्थनिर्णयसभायां, त्रीन्वत्सरानभिव्याप्य सेनेट्एकडमिक कौन्सिल सभयोश्च सभ्यतामयं समासादितवान्। B. A. सभायां आनर्स सभायां, ओरियंटल् सभायां च बहुवारं परीक्षकतां प्राप्य यथाविधि यथाशक्ति च स्वीयं कार्यक्रमं निर्व्यूढवानयम् त्रिचतुरेषु इतरराष्ट्रीयेषु, केषुचिद्विश्वविद्यालयेष्वपि परीक्षकपदवीं निर्व्यूढवानयम्।

मृदुमधुरमञ्जुलमनोज्ञायां शैल्यां सहृदयहृदयङ्गमं चतुरं चमत्कृतिमच्च वचनरचनमस्य खल्वाजन्मसिद्धो गुणः। अस्य रचनासु कलभाषिणी प्रथमा। पिङ्गलि-सूरनार्यस्य कमनीया कृतिः कलापूर्णोदयमान्ध्रभाषामद्वितीयः प्रबन्ध इति ननु विदितं सर्वेषाम्। तत्र कथाचमत्कारः कल्पनारीतिः पात्रचित्रणं रसपोषणं च बालानामपि हृदयगोचरा भवेयुरिति मनसिकृत्य, ललितवचनरचनायां मधुरायां शैल्यां कलभाषिणीं रचयामास।

---

अस्य रचानायां सौन्दर्यातिशयः कौशलातिशयश्च यो जागर्ति तस्य विज्ञातारः प्रयोक्तारश्च सन्ति प्रविरलाः। भगवता गौतममहर्षिणा प्रणीतं न्यायदर्शनमान्ध्रभाषायामयमनूदितवान्। अयं शास्त्रग्रन्थानुवादः, अन्यूनानतिरिक्तोऽतिविशदश्च पण्डितानां प्रशंसायाः पात्रमभूत्।

अस्य रचनासु निरन्तरवरणीयश्च ग्रन्थो रमणीयम्। अयं चामेयप्रतिभासम्पन्नस्य चिन्नयसूरेर्बालव्याकरणस्य समीक्षालक्षणः। बालव्याकरणमुद्दिश्य बहुषु व्याख्यानेषु प्रकाशितेष्वपि, एतादृशी रमणीयसमीक्षा नाविष्कृतेति परिशीलकषण्डितलोकसिद्धान्तः। पञ्चचत्वारिंशत्संवत्सरपरिमितेऽध्यापनकाले समार्जितया व्युत्पत्त्या, आन्ध्रसारस्वताम्बुधिमथनेन च सम्पादितममृतकलशं रमणीयम्। चिन्नयसूरेः परिणतप्रज्ञायाः फलितं बालव्याकरणम्। शास्त्रिमहोदयस्य निर्विरामकृषेः फलितमिदं रमणीयम्।* मन्यामहे चैतादृशी कृतिरियमान्ध्रभाषाध्यापकानां पुराकृतंसुकृतफलम्। अस्मिन् प्रतिप्रकरणं प्रतिपङ्क्ति प्रतिपदं च शास्त्रिमहोदयस्य परिशीलनारामणीयकं, सूक्ष्मदृष्टिकौशलं च परिस्फुरतः प्रतिपदम्। अस्य हृदये भव्या भावाः सूरेस्सरसं हृदयं सम्यगाविष्कुर्वन्ति। रमणीयस्य रचनाप्रणालिकायामनेन प्रदर्शिते, श्रद्धासक्ती, शक्तियुक्ती स्पष्टतास्वच्छते, औचित्यसौन्दर्ये च निरुपमे अनितरसाधारणे च। रमणीयेऽस्मिन्नुक्तिलालित्यं, शीलसौम्यता प्रयोगपरिशीलन, मनुवादविवेचनं चेति प्रकरणान्यतीव हृदयावर्जकान्यत्यन्तश्लाघनीयानि स्पृहणीयानि च। इदं रमणीयमस्य कीर्तिप्रतिष्ठयोरजरामरा रमणीया मूर्तिः। सूरेस्सुन्दरमूर्ति शास्त्री रमणीयरूपेणान्ध्रपाठकानां हृदयपीठे सुस्थिरामकरोत्।

एतेभ्यो ग्रन्थेभ्यो व्यतिरिक्ततया, भाषावाङ्मये अधिकृत्य, आन्ध्रसाहित्यपरिषत्पत्रिकासु प्रकटितानामस्य निबन्धानां संख्याऽऽसन्नचत्वारिंशेति वक्तुं वयं प्रमोदामहे। आकाशवाणीमुखेनानेन कृताः

---

* रमणेन प्रोक्तम् रमणीयम्। रमणशब्दात् 'वा नामधेयस्य' इति वार्तिकेन वैकल्पिकवृद्धसंज्ञायां, वृद्धाच्छ इतिसूत्रेण छप्रत्यये ईयादेशे रमणीयमितिरूपम्। रम्धातोरनीयर् प्रत्यये रमणीयमित्यपरं रूपम्। उभयोरपि रमणीयशब्दयोरेकशेषे, रमणीयमिति रूपं सिध्यति। रमणेन प्रोक्तं सुन्दरं चेति रमणीयमित्यस्यार्थः।

व्याकरणवाङ्मयादिललितप्रसङ्गा बहुवो बहुवारं प्रसारिता स्सारस्वत-श्रोतॄणां श्रोत्रयोरमन्दमानन्दमुपजनयन्ति ।

अस्यैवंविधविशिष्टतां विज्ञाय, अस्माकं देशे स्थिता बहवस्सारस्वतसंस्थाः सम्मानयामासुः । तत्र भवतश्चिन्नयसूरेश्शतवार्षिक-जयन्त्युत्सवसन्दर्भे सूरिशब्दशास्त्रवैदुष्यमधिकृत्य शास्त्रिमहोदयो मधुरं ललितं गम्भीरं च प्रसङ्गमकरोत् । तन्निशम्य, जातविस्मया आन्ध्र-साहित्य अकाडमी सभ्याश्शास्त्रिमहोदयं महता वैभवेन गौरवादराभिमानपुरस्सरं सम्मानयामासुः ।

नन्नयपदकोशाविष्करणसन्दर्भे, आन्ध्रप्रदेशराजधान्यां भाग्य-नगर्यां श्रीकृष्णदेवरायभाषानिलये, बहुभिर्भङ्गिभिर्बहूकृत आसीदयम् ।

रमणीयसम्मेलनसन्दर्भे तेनालिनगरे समवेताः कृष्णागुण्टूरु-मण्डलपण्डिता महतोत्साहेन समाविष्टा अभूवन् । "क्लिष्टकर्कशो व्याकरणांशोऽपि शास्त्रिणां वचनेषु मनोहरकाव्यत्वरीतिमभजतेति, न सन्ति ते मनीषिणो, ये भवत्पाण्डितीपटिम्नस्सौजन्यगरिम्णश्च विस्मिता न भवन्तीति, नास्त्येकाप्यान्ध्रविश्वविद्यालयसम्बन्धिनी कलाशाला, यस्यां न सन्ति भवतशिष्या इति च वदन्तस्सानन्दमभ्यनन्दन् । बहुभिर्बहुमानैश्च शास्त्रिप्रवरं बहूकृतवन्तश्च । अददुश्च तस्मै धनभस्त्रिकां, या स्वेषां कृतज्ञतां व्यञ्जयति ।

विशाखपत्तने, आन्ध्रप्रदेशप्रभुत्वेन निर्व्यूढे मण्डलीये सत्कारे शास्त्रिप्रवरोऽपि महता वैभवेन सत्कृतः ।

विजयनगरादारभ्य, अनन्तपुरपर्यन्तमुपदशसु पत्तनेषु रमणीयाविष्करणसन्दर्भे संप्रवृत्तेषु समावेशेषु पारितोषिकप्रदानपुरस्सरं शास्त्रिमहोदयस्सम्मानितश्श्लाघितश्च ।

एवमप्रतिमप्रतिभानां गुरूणां सन्निधावध्ययनेन गीर्वाणान्ध्र-भाषाद्वयपाण्डितीपटिम्ना, शिष्याणां महोल्लासजनकेन विज्ञानदायकेन,

पञ्चचत्वारिंशद्वत्सरपरिमितेनाध्यापनोद्योगेन अनितरसाधारणेन, विशेषप्रशंसापात्रेण च शिष्यवात्सल्येन, देशव्याप्तायाश्शिष्यसन्ते-र्बाहुल्येन, सरससुकुमारवचनरचनाकौशलेन रमणीयमित्यन्वर्था-भिधानेन प्राप्तसारस्वतप्रशंसाया व्याकरणसमीक्षाया रचने नैपुण्येन, उदाररूपवित्रशीलसौकुमार्येण च सहितममुमुद्दिश्य, आन्ध्रविश्व-विद्यालयाधिकारिभिर्दत्तमिदं कलाप्रपूर्णबिरुदं समुचितं समञ्जसं समीचीनं चेति मत्वा कांक्षितशिष्याभ्युदयं शास्त्रिमहोदयं प्रति धन्यवादानर्पयामः ।

# यतिपतेरागमनम्

सकलसुगुणसिन्धुः, सर्वलोकैकबन्धुः
समहितनिजनामा, संस्तुतौदार्यभूमा ।
बुधजनहृदयालुः, भूतजाते दयालुः
स जयति यतिचन्द्रः, सन्नुतः कीर्तिसान्द्रः ॥

विश्वं विश्वमपीश्वरार्पितमतिं कुर्वत्सुदूरस्थिता–
मन्दानन्दपदं पदं गमयितुं शक्तं निधानं मुदाम् ।
आधानं सुकृतस्य यद्गुरुपदाम्भोजातसंसेवनं
कीर्तिं वर्धयते तदेव हि नृणां सर्वात्मना शाश्वतीम् ॥

सदा समाराधितचन्द्रशेखरः
सरस्वतीनिस्तुलमूर्धशेखरः ।
शिरोधृतश्रीयुतमाल्यशेखरः
जयत्वयं सम्प्रति चन्द्रशेखरः ॥

अनवरतविद्याविद्योतितशान्तस्वान्तानां, गणेयागणितगुणगणशेवधीनां, वदान्यतागुणचरमावधीनां अश्रान्तविचारितानन्तवेदान्तरहस्यानां, षडङ्गसहितचतुर्वेदरक्षणदीक्षाबद्धकङ्कणानां, वर्णाश्रमधर्मसहितकर्मकाण्डासक्तपण्डितप्रकाण्डपरिपोषणबद्धलक्ष्याणां, समस्तसन्मङ्गलसमवाप्तिलक्षणमहोपदेशबोधननिरतानां सदयहृदयानां सहृदयानां जगद्गुरुश्रीश्रीश्रीं काञ्चीकामकोटिपीठाधिपतीनां चन्द्रशेखरस्वामिपादानां पादपद्मसन्निधौ सविनयमिदं विज्ञाप्यते. ।

भो भोस्स्वामिचरणाः । तत्रभवतां भवतां पादपङ्कजरजस्सङ्गेन न केवलमियं भूमिः पूता, मृदुमधुरमनोहरगम्भीरोपन्यास

श्रवणेन नश्श्रवणे पूते, सुन्दरसुकुमारसुधीरनिग्रहसहितभवद्विग्रहदर्शनेन नश्चक्षुषी पूते, मनोहरतमोहरशिवङ्करवशङ्करभवद्गुणगणसमाकर्णनेन नो हृदयं च पूतं जातम् । असदृशानां भवादृशानां लोकगुरूणां दर्शनं ब्रह्मणो दर्शनमिव किमिव हि न जनयति जगति जन्तूनाम् । श्रियं वितनोति । अघानि दलयति । श्रेयो ददाति । कीर्तिप्रतिष्ठे जनयति । अपि च कालत्रयेऽपि शरीरभाजां योग्यतां व्यनक्ति । प्राक्कालिक दर्शनेन सांप्रतिकमघमपहरति । साम्प्रतिकेनैव दर्शनेन भाविन्यपि जन्मनि पापपरिहारी भविष्यति । जन्मान्तरकृताद्दर्शनादेव, सांप्रतं भवद्दर्शनफलमनुभवामः । अनन्तकिरणेनापि सूर्येण यत्तमो नापनुद्यते तत्तमोऽपि भवता नन्वपनुद्यते । अत एवोपात्तरसानुभूतिना भवभूतिना "सतां सद्भिस्सङ्गः कथमपि हि पुण्येन भवति" इत्यभिहितम् । तेन साधूनां चरितं विशुद्धमिति निष्कपटमिति चोच्यते । भवादृशोदाहरणयोग्यजनदर्शनेनैव श्लोकोऽयं रचितस्स्यात् ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मति, रनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥

उत्तर. रा. २–२

सन्ति लोके दर्शनीयान्यतिपवित्राणि गङ्गायमुनासरस्वतीप्रमुखानि तीर्थानि । विलसन्ति च विशालाक्षीसनाथस्य विश्वनाथस्य वसतिः काशी, सकलकल्याणनिवासस्य श्रीनिवासस्य वसतिस्तिरुपतिः सकलजनवराभयदानदीक्षितस्य वसतिः काञ्ची चेति । दिव्यानि क्षेत्राणि एवं तीर्थैः क्षेत्रैः देवताभिश्च मानवस्य पवित्रतायां सिध्यन्त्यां किमर्थं साधुजनसंसेवा कर्तव्येत्याक्षेपस्य समाधानतया केनचिदभियुक्तेनोक्तम् । तीर्थानि क्षेत्राणि देवताश्च चिरेण कालेन पुनन्ति । साधवस्तु दर्शनानुपदमेव पुनन्ति । तस्माद्भवद्दर्शनममोघमिति वयं मोदामहे वन्दामहे च बहुवारम् ।

किञ्चिदूनेभ्यः पञ्चाशद्वर्षेभ्यः प्रभृति श्रीनारसिंहसंस्कृत-कलाशालेति नाम्नैवाम्नायमाना संस्कृतकलाशालेयमत्र प्रचलति। व्याकरणशास्त्रं, न्यायशास्त्रं, अलङ्कारशास्त्रं, चाध्याप्यन्ते। आन्ध्र व्याकरणमान्ध्रप्रबन्धाश्चाध्याप्यन्ते। एतदध्यापनार्थमत्र विद्याप्रवीण-भाषाप्रवीणकक्ष्याः प्रचाल्यन्ते। अत्र, अष्टावध्यापकास्सन्ति। षष्टि-श्छात्राश्च सन्ति। श्रीमतां S. T. G. वरदाचार्याणां पुत्रः श्रीमान् S. T. G. नरसिंहाचार्यः, अध्यक्षपदवीमधितिष्ठति।

इयं कलाशालास्माकं पोषणकर्त्री माता। ईप्सितार्थदात्री कल्पवल्ली च। अस्या उत्सङ्ग एव वृद्धिं परिपोषं च नीता वयम्। ददातीयं कल्पवल्ली काङ्क्षितानि फलानि। अस्याः कल्पवल्ल्याः प्ररोहकः, अस्मांक गुरुवर्यः S.T.G. वरदाचार्यमहोदयः। अयं नाना-दिङ्मुखसमागतद्विजकुलावासः, विनिद्रसुमनोविराजितः पूरितसकल जनमनोरथः, मनोभिरामो वरद इति विख्यातः, कल्पवृक्षः। एतत्कल्प-वृक्षसमाश्रिताया अस्या कल्पवल्ल्याः छायायां वयं निवसामः, अनु-भवामश्चास्यास्सुमधुराणि फलानि।

अनुगृह्यतामेषा कल्पवल्ली भवतां करुणाकटाक्षैरनवरतम्। योज्यतां च पुरःपाकाभिराशीर्भिरिति च पुनः पुनरभ्यर्थयामहे। अमोघेन फलेग्रहिणा च भवद्दर्शनेन वयमसीमानमानन्दमनुभवामः। विहिताञ्जलयो, रोमाञ्चितगत्रास्सगद्गदकण्ठस्वराः पुनः पुनः प्रणमामश्च ॥

# आदिकविरादिकाव्यञ्च

परमकारुणिकस्त्रिजगत्पूज्यश्च भगवान् वाल्मीकिर्जनस्य हितमुपदेष्टुकामः, परमपवित्रं श्रीमद्रामायणं नाम महाकाव्यं प्रणिनाय । सहृदयहृदयङ्गमं तत्काव्यं, अक्षयं सत्यसूक्तिनिधिं, नीतिरीतिनिलयं धर्ममार्गदर्शकं च भावयन्ति भारतीयाः । भारतीयानामिदं, कामितार्थप्रदः कल्पवृक्षः, कांक्षितार्थदायिनी कामधेनुः, चिन्तितार्थप्रपदश्चिन्तामणिश्च । तदाप्रभृत्यद्यावधि रामायणं भारतीयानां पारायणग्रन्थ इति प्रशस्तिं लभते । काव्यस्यास्य वेदस्येव महत्प्रामाण्यमङ्गीकुर्वन्ति सुधीतल्लजाः ।

"वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥

वेदवेद्ये परमपुरुषे, दशरथनन्दनत्वेन धरणिमवतीर्णे सति, परमपुरुषस्य महिमातिशयमुपवर्णयन् वेदो रामायणात्मना भगवता वाल्मीकिमहर्षिणा प्रणीत इति भावः ।

अपि च,

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥

रघूणां धुरि कीर्तनीयस्य रामचन्द्रस्य दिव्यं चरित्रं शतकोटिश्लोकैस्सनाथं सत्यलोके प्रकाशते । तस्मिन्नेकैकमक्षरमपि पञ्चापि महापातकान्यपोहितुमलम् । अन्यच्च--

वाल्मीकिगिरिसम्भूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥

वाल्मीकि-सानुमति समुत्पन्ना रामसागरे पतन्ती विविक्ता रामायणनदी पवित्रयति मध्यमं लोकम् ।

रामायणं नाम सकलमानवानामनुभवयोग्यो मधुरपदार्थः । अस्मिन् शब्दा मधुराः । अर्थाश्च मधुराः । पात्राणि मधुराणि कथा च मधुरा । कविताऽपि मधुरा । माधुर्यरहितः पदार्थोऽत्र कश्चिदपि न दृश्यते । अत एव गीर्वाणवाणीसेवालालसमानसो महापतिर्महीपतिर्भोजः प्रतिभावन्तं वाल्मीकिं प्राशंसीत् ।

"मधुमयभणितीनां मार्गदर्शी महर्षिः ।" इति ।

कर्मानुष्ठानपरो वेदाध्ययनशीलश्शास्त्रार्थकोविदः, विज्ञाननिधिरज्ञाननिवर्तकश्च त्रिलोकसञ्चारी नारदः, कदाचिद् ब्रह्मणा चोदितो, भगवतो वाल्मीकेरन्तिकमाजगाम । भगवान् वाल्मीकि र्मुनिपुङ्गवं नारदमेवं परिपप्रच्छ ।

कोन्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान्
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कस्समर्थश्च कश्चैकप्रियदर्शनः ॥

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥

रामा० बाल० २–५

प्रघट्टकस्यास्यायं सारांशः--हे नारद ! सर्वत्र चरित्वा सर्वान् विषयान् वेदितुं भवान् समर्थः । अपि जानासि ? अस्मिन् लोके कोनु समर्थः ? कस्सौशील्यसम्पन्नः ? को वा तिरस्कर्ता परेषाम् ?

सामान्यधर्मान् विशेषधर्मांश्च को जानाति ? स कः ? कृतमुपकृतं यो न विस्मरति । किन्तु तत्सदसि प्रशंसति स कः ? क्लेशाननुभूयापि यस्सत्यव्रतमनुतिष्ठति । सत्स्वपि महत्स्ववरोधेषु, यः प्रारब्धं न परित्यजति ? कुलक्रमागतेषु सामयिकेष्वाचारेष्वभिविनीतः कः ? मित्राणामिव शत्रूणामपि को जानीते ? कः प्रजा अनुरञ्जयति ? को वा प्रियदर्शनः ? को वा जितक्रोधः ? को वा धैर्यवान् ? को वा अरिषड्वर्गविजयी ? को वा गुणेषु दोषाविष्करणं न करोति ? को वा जातरोषस्संयुगे देवानामपि भयमुत्पादयति? एवंविधो महनीयो मानवो यत्र कुत्रापि त्वया दृष्टश्चेत्, कथय, यतश्श्रोतुं मम जायते परं कौतूहलम् ।

विशेषज्ञः कालत्रयवेदी, लोकत्रयसंचारी च, देवर्षिर्नारदो ब्रह्मर्षिं वाल्मीकिमवोचत् ।

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा, तैर्युक्तश्श्रूयतां नरः ।।

इक्ष्वाकुवंश प्रभवो रामो नाम जनैश्श्रुतः । रामा—१. १-७-८

त्वया कीर्तिता गुणा स्सर्वेऽपि, परमपुरुषादृते, लोकेऽस्मिन् स्थिते नरे न भवन्ति । तथापि, इक्ष्वाकुकुलतिलको रामो गुणैः परिपूर्णः, स सप्रजाः प्रजा अनुरञ्जयन्, प्रजानां प्रशंसायाः पात्रं भवति । एवं रामस्य जनानुरञ्जकान् गुणान् पवित्रं चरित्रं च संक्षेपेणाभिधाय हरिनामस्मरणं कुर्वन् मुनिर्नारदस्तिरोबभूव ।

नारदोपदेशश्रवणानन्तरं महर्षिर्वाल्मीकिर्माध्याह्निकसवनकर्मनिर्वहणाय तमसानदीं जगाम । स जितेन्द्रियोऽपि विधिचोदितः, प्रकृतिशोभामवलोकयन्, रसमयं समयमयापयत् । सपल्लवबालपत्रशोभितायां तरुशाखायां प्रेमातिशयपुरस्सरं कालं यापयत् क्रौञ्चद्वन्द्वमपश्यत् । स तत्सौन्दर्यातिशयं पश्यन् परवशो बभूव । अपरिमिता-

नन्दपरवंशो बभूव । विटपान्तरितगात्रः करुणारहितः कश्चिद्व्याधो निशितशरेण विव्याध पुरुषपक्षिणम् । मर्मणि गाढं प्रहतस्स पक्षी, दिक्षु चक्षुश्शून्यं विक्षिपन् , पक्षावितस्ततो विधुन्वन् पपात भूमावसंस्कृतायाम् । पतनानुपदमेव, विजहौ प्राणान् । द्वितीयः पक्षी पत्युर्विरहमसहमानः दैन्यं प्राप । बभूव च किंकर्तव्यताविमूढः । हृदयविदारकस्य करुणरसस्य पदमिदं प्रतिभयदृश्यं पश्यतस्सहजकारुण्य स्वभावस्य महर्षेर्मनस्यजायत महती वेदना । परदुःखदुःखितस्य महर्षेर्मुखात्--

"मा निषाद प्रतिष्ठां त्वमगमश्शाश्वतीस्समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

"हे व्याध ! यतस्त्वं क्रौञ्चद्वन्द्वात् सुरतक्रीडाविवशं पुरुषपक्षिणं हेतुं विना हतवानसि, ततश्चिरेणानुभव, दुस्सहं दुःखम् । मा गमश्च प्रतिष्ठाम्" इति सारांशः । शोकविकलचित्ते मुनिसत्तमे, किरातं प्रति दत्तशापे, शापाक्षरेषु, समानाक्षरैश्चतुर्भिः पादैस्सहिते श्लोके संवृत्ते, वाल्मीकिराश्चर्यचकितो बभूव ।" इति विचारयति महामुनौ भूतभावनः पद्मयोनिः पुरतः प्रत्यक्षीभूय, प्राञ्जलिं प्रणतं च वाल्मीकिमेवमवोचत् ।

श्लोक एव त्वया बद्धो नात्रकार्या विचारणा ।
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ॥

अतो भवान्नारदादाकर्णितं रामचरितं रचयतु । अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः प्रतिभातु । आद्यः कविरसि । श्लोकोऽयं रामायणस्य नान्दी भविष्यतीत्यभिधाय तिरोहितो बभूव ।

मानिषाद = हे श्रीनिवास! शास्वतीस्समाः = बहून् वत्सरान् त्वं = भवान्, प्रतिष्ठां अगमः = मर्यादां प्राप्नुहि । यत् = यस्माद्धेतो क्रौञ्चमिथुनात् = राक्षसद्वन्द्वात् , काममोहितं = कामार्तं, एकं = अन्यतरं

पुरुषपक्षिणं, अवधीः=हतवानसि। इति श्लोकस्यार्थोऽयमभियुक्तैरभिवर्णितः।

ब्रह्मणा समादिष्टो ब्रह्मर्षिर्वाल्मीकिः, करुणरसभरितं, व्यङ्ग्यार्थसम्भृतं, शब्दार्थचमत्कारसुन्दरं, अष्टादशभिर्वर्णनैर्बन्धुरं, द्राक्षापाकमिलितं, रसानुगुणशय्यायुतं, रामायणं नाम महाकाव्यं रचयामास। इदमनेकेषां व्यङ्ग्यार्थानां स्फोरकम्। रामायणं रामायणतुल्यमित्यत्र न कस्यापि सन्देहः। व्याख्यातारस्स्वप्रतिभाविशेषात्, अनेकार्थान् प्रतिपादयितुं समर्था भवन्ति। केषांचन श्लोकानां, अर्थदशकमप्यस्तीति कथनं नात्युक्तिर्नाप्यतिशयोक्तिः। हृद्यं पद्यमिदमाकर्ण्यताम्।

'रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्।
अयोध्यामटवीं विद्धि, गच्छ तात यथासुखम्॥'

अयमत्र सन्दर्भः-श्रीरामस्सीतया साकं, पितृवाक्यपरिपालनार्थमटवीं प्रति प्रतस्थे। लक्ष्मणोऽपि राममनुससार। तस्मिन्त्समये हितमुपदिशन्त्या मातुस्सुमित्रायाः, स्वसुतं लक्ष्मणं प्रत्युक्तिरियम्। पद्येऽस्मिन् व्याख्यातृभिरभिहितान्, उपदशानर्थानभिधातुमत्र वयं प्रयतामहे।

(१) तात=वत्स, लक्ष्मण, तदा, यदा त्वमटव्यां वर्तसे, रामं=रामचन्द्रं, दशरथं=तव पितरं दशरथं, विद्धि=जानीहि। सीतां=तव प्रजावतीं, मां=तव मातरं मां, विद्धि=जानीहि। अटवीं=अरण्यं, अयोध्यां=अयोध्यापुरीं, विद्धि=जानीहि। यथासुखं=सुखमनतिक्रम्य, गच्छ=प्रयाणं कुरु।

(२) तात=वत्स, लक्ष्मण, रामं=रामचन्द्रं, दशरथं=गरुडवाहनं विष्णुं, विद्धि=जानीहि। जनकात्मजां=सीतां, मां=लक्ष्मीं,

विद्धि= जानीहि। अटवीं= अरण्यं, अयोध्यां=वैकुण्ठपुरीं, विद्धि= जानीहि। यथासुखं गच्छ=सुखमनतिक्रम्य कुरु यात्राम्।

(३) तात=वत्स, लक्ष्मण! रामं विद्धि, दशरथं विद्धि= अर्थात् पितृवाक्यपरिपालकं रामं जानीहि। प्रियावचनं श्रुत्वा प्रियसुतमटवीं प्रेषितवन्तं दशरथं जानीहि। जानीहि पितापुत्रयोः कियदन्तरमस्तीति। मां विद्धि, सीतां विद्धि=मम च सीतायाश्च यदन्तरं दृश्यते तदवधेहि। अयोध्यां विद्धि, अटवीं विद्धि=अयोध्याया अटव्याश्च यदन्तरं तज्जानीहि। अयोध्याया अटव्येवोत्तमा, यस्यां ते भ्रातृपरिचर्याया अवकाशो लभ्यते। यथासुखं गच्छ=सुखेन प्रयाणं कुरु।

(४) तात=वत्स, लक्ष्मण, दशरथं=तव पितरं, रामं विद्धि=उपरतं जानीहि। मां=सुमित्रां, जनकात्मजां=जनकस्य आत्मजां=निजपितृगृहवर्तिनीं, विद्धि=जानीहि! अयोध्यां= अयोध्यानगरीं, अटवीं निर्जनसञ्चारां विद्धि=जानीहि।

(५) तात=वत्स लक्ष्मण! रामं दशरथं विद्धि=सोपाधिकपितरि दशरथ इव निरुपाधिकपितरि रामे प्रीतिं कुरु। मां विद्धि जनकात्मजां=सोपाधिकमातरं मां विहाय निरुपाधिकमातरि सीतायां भक्तिं कुरु। अयोध्यां अटवीं विद्धि=सोपाधिकामयोध्यां विहाय, रामनिवासत्वेन निरुपाधिकप्राप्यदेशे वने प्रीतिं कुरु। यथा सुखं गच्छ=सुखेन यात्रां कुरु।

(६) तात=वत्स लक्ष्मण! रामं=रामचन्द्रं, दशरथं= दशरथसमं विद्धि=जानीहि। ज्येष्ठभ्राता पितृसम इति स्मरणात्। जनकात्मजां=सीतां, मां=मातृसमां, विद्धि=जानीहि, अटवीं= अरण्यं, अयोध्यां=अयोध्यावद्भोग्यतमां विद्धि=जानीहि।

(७) तात=वत्स लक्ष्मण! रामं दशरथं विद्धि=रामं दशरथमिव स्त्रीपरवशं जानीहि। जनकात्मजां मां विद्धि=अहं यथा

राममनुगच्छेति वदामि, एवमेव जानकी वदिष्यति। अयोध्यामटवीं विद्धि = अटवीमपि विहायान्यत्र गच्छेत्। सर्वत्र सावधानो भव। यथासुखं गच्छ = सुखेन यात्रां कुरु।

(८) रामं दशरथमिवातिशूरं विद्धि = जानीहि। देवासुर युद्धे दशरथस्य शौर्यं सुप्रसिद्धम्। जनकात्मजां मां विद्धि = सीतां मामिव अभिनन्दनपरां जानीहि। यथाहं भर्तृविजये भर्तारमभिनन्दामि तथा जनकात्मजापि राममभिनन्दिष्यति। अयोध्यामटवीं विद्धि = अयोध्यां व्याघ्रावासं गुल्ममिव जानीहि।

(९) रामं दशरथं विद्धि = दशरथो यथा रामविश्लेषं न सहते तथा रामो युष्मद्विश्लेषं न सहते। मां विद्धि जनकात्मजाम् = अहं यथाभवद्विश्लेषं न सहे तथा सीता भवद्विश्लेषं न सहते। अयोध्यामटवीं विद्धि = रामविश्लेषेणायोध्या यथाऽपभ्रष्टमनुष्या चेत्याद्यवस्थां प्राप्ता तथा, अटव्यपि, "अपि वृक्षाः परिम्लाना" इत्याद्यवस्थां प्राप्नोति।

(१०) रामं = पदातिरिति मावमंस्थाः। दशरथं विद्धि = पुष्पकादिबहुरथसंचारिणं विद्धि। दश रथा यस्य सः, दशसु दिशासु, अप्रतिहताः रथा यस्येति च विग्रहः। मां विद्धि जनकात्मजां = देवासुरादियुद्धेषु दशरथेन सह यथाहं सञ्चरामि तथा सीता रामेण सञ्चरिष्यति। अयोध्यामटवीं विद्धि = इदानीम्।

(११) दशरथं रामं विद्धि = रामे यथा पितृत्वबुद्धिपूर्तिः, तथा दशरथेऽपि कुरु। "अहं तावन्महाराजे पितृत्वं नोपलक्षये। भ्राता भर्ता च बन्धुश्च पिता च मम राघवः" इत्युक्तरीत्या, दशरथे अवज्ञामकृत्वा रामस्य दशरथे पितृत्वबुद्धिपूर्तिमनुसृत्य, त्वयापि तादृशबुद्धिः कार्या। मां विद्धि जनकात्मजाम् = दशरथपाणिग्रहणकृतदोषं मनस्यकृत्वा, रामसपत्नीमातृत्वप्रयुक्तबहुमानं वा अनुसृत्य मयि सीतायामिव मातृत्वबुद्धिपूर्तिः कार्या। अयोध्यामटवीं विद्धि।

"वनं नगरमेवास्तु, येन गच्छति राघवः।" इत्युक्तरीत्या, अयोध्यावमतिर्न कार्या। रामपादुकासनाथत्वेनायोध्याप्युद्देश्यतयानुसन्धेया। एवमेकस्यैव श्लोकस्य बहवोऽन्वया व्याख्याविधायिभिरभिधीयन्ते।

अपिचान्यो विशेषः-- विश्वामित्रस्तु निर्विघ्नं निज यज्ञनिर्वहणानन्तरं, राघवाय जानकीं दिदापयिषुर्मिथिलां प्रति प्रातिष्ठत। मध्येमार्गं रघुनन्दनचरणकमलरजस्संसर्गेण शिलाभावाद्विमुक्ता गौतमसहधर्मचारिण्यहल्या रघुनन्दनं सानन्दमपूजयत्। "तदनु मिथिलां प्रविश्य गृहीतातिथ्ये कौशिके निजागमनकारणमावेदयति, जनकेन प्रदर्शितंशिवशरासनं दशरथात्मजो बभञ्ज।" जातानन्दो जनकोऽपि सकुटुम्बपुरोधसं दशरथं—स्त्वरितगतिभिर्दूतैराह्वापयामास। तदा महोत्साहेन सीतारामयोः पाणिग्रहणमहोत्सवं कर्तुकामो जनकः, कल्याणमण्डपं प्रति सकलसद्गुणनिलयां सर्वाभरणभूषितां सहजविनयोपेतां सर्वाङ्गसुन्दरीं सीतामादाय रामाभिमुखं स्थापयित्वा, तमेवं वक्तुमारेभे।

"इयं सीता मम सुता सहधर्मचरी तव।
प्रतीच्छ चैनां भद्रं ते पाणिं गृहणीष्व पाणिना॥
पतिव्रता महाभागा छायेवानुगता सदा।"

अत्र भगवतो वाल्मीकेर्मात्रनाशक्तिरस्माभिरवलोक्यते। इयं सीता मम पुत्री। भवतस्सर्वदा सहधर्मचारिणी भविष्यति। इमां परिगृहाण। भवतु भवतश्शुभम्। पाणिं गृण्हीष्व पाणिना। इयं पतिव्रता, कीर्तिसम्पन्ना, छायेव त्वामनुगमिष्यति। अयं श्लोकस्यास्य वाच्योऽर्थः।

हृद्ये पद्येऽस्मिन् बहवो व्यङ्ग्यार्थास्सन्ति गर्भिताः। इयमिति प्रत्यक्षनिर्देशेन, सौन्दर्य, सौकुमार्यं, लावण्यं, इत्यादयो बहवो गुणा व्यज्यन्ते। सीतेति नामनिर्देशात् हलरेखायामियं दृष्टा, अयोनिजा महाद्भुतशक्तियुक्तेति च व्यज्यते। यस्या विख्यातं नाम निशम्य

त्वमियद्दूरमागतवानसि, सेयं सीतेति वक्तुरुचितवैचित्र्यम् । मम सुतेति कथनात्, आचारप्रधानानामस्माकं वंशे जातेयमिति, आभिजात्यमभिव्यज्यते । पाणिं गृह्णीष्व पाणिनेति कथनात् विवाहोऽयं नाधर्म्यो, राक्षसविवाहः नापि गान्धर्वःनचाप्यासुरो न वापि च पैशाचः किन्तु धर्म्यो ब्राह्मविवाहः, यः खलु "ब्राह्मो विद्याचारित्रशीलसम्पन्नाय दद्यादाच्छाद्यालङ्कृता" मिति भगवता गौतमेन धर्म्यतया निर्णीतः । "भद्रं ते" इत्यनेन समानकुलशीलरूपवयसोर्नूतनवधूवरयोर्दृष्टिदोषपरिहारार्थं शुभमस्त्वित्याशीर्वचनम् ।

राम इत्यभिरामं नाम तारकं नाम । रामनाम्नो यन्महिमा तदितरनाम्नां नास्ति । सकलसुगुणरत्नाकरो राम एव विष्णुरिति नारदो निरणैषीत् । यागसंरक्षणं अहल्याशापविमोचनम्, शिवधनुर्भङ्गः परशुरामविजयः, सप्तसालभेदनम्, वालिवधः सेतुबन्धनमित्यादयो विषया रामस्य परमपुरुषत्वं निर्णयन्ति । रामपदव्युत्पत्तिरपि [रामस्य] महत्तां प्रकटयति । रमयति सर्वान् गुणैरिति राम इत्येका व्युत्पत्तिः । यद्वा, रमन्ते योगिनोऽस्मिन्निति राम इत्यपरा । एताभ्यां व्युत्पत्तिभ्यां, सर्वान् गुणैस्सन्तोषयत्ययमिति, सर्वेऽपि रामगुणान् वीक्ष्य सन्तुष्यन्तीति च निर्गलितोऽर्थः ।

सर्वश्रेयोऽभिलाषिणा रामदूतेनाञ्जनेयेन जञ्जप्यमानमानन्ददायकं रामनाम विपदो रुणद्धि । सम्पदो वितरति च । निरर्थकमपि रामनाम समुच्चरितं चेत् शाश्वतं भगवताधाम ददाति । पुरा किल केचिच्चोरा दुष्प्रवेशे वने निवसन्तो वनमार्गेण चरतो जनान् बाधित्वा, तद्धनं वनिताश्च हरन्तो,

"वनेचरामो वनिता हरामो नदीस्तरामो न भयं स्मरामः"

इत्यनारतं गायन्त आसन् । ते च जीवितान्ते निरर्थकस्यापि रामपदस्यासकृदुच्चारणादपवर्गमुपगता इति प्रतीतिः । अत एव कश्चिद्विपश्चित् प्रत्यहं भगवन्तमेवं ध्यायति ।

"ध्यायामि राम मभिराममगिरामरन्द-
धाराममधुघ्नमितराममरेर्विरामम् ।
आराममद्भुततरामलसद्गुणानां
घोराममयघ्नमसुरामरवन्दिताङ्घ्रिम् ॥

विश्व-चं" इति ।

अत्र दशवारं रामपदस्य निबन्धनं कृतम् । यदि पद्यमिदं दशवारं पठ्यते शतकृत्वो रामपदोच्चारणफलं लभेत पठिता । अत्र दशसु रामपदेषु, राममित्येकमेवपदं सार्थकं, इतराणि निरर्थकानि । अभिरामपदे रामपदं निरर्थकम् । गिरामरन्दधाराममधुघ्नमित्युभयत्रापि पदद्वयसंयोजनेन रामशब्दद्वयं निष्पादितम् । घोराममये रामो दृष्टः कविना । किं बहुना ! परस्परविरोधिष्वसुरेष्वमरेष्वपि रामो विलोकितो भक्तवरेण्येन । निरर्थकमपि रामपदमपवर्गप्राप्तौ हेतुरिति विपश्चितामपश्चिमोऽभिप्रायः । न केवलं निरर्थकं रामपदं, व्यत्यस्तमपि रामपदमुच्चरितं चेत् रामनामोच्चारणफलं दद्यादिति कोविदा विदन्त्येव । भगवान् वाल्मीकिरपि स्वपूर्वावस्थायां, व्यत्यस्तरामपदोच्चारणेनैव कविताधारां लब्धवानिति वदन्ति लब्धवर्णाः ।

भगवतो वैकुण्ठरामस्य धामनि भद्रगिरौ आलयगोपुरप्राकारमण्डपादीनां निर्माता भागवतोत्तमो गोपराजः, श्रीमद्भागवतस्य परिवर्तयिता, भक्तवरेण्यः पोतराजः, सुप्रसिद्धानां, रामकीर्तनानां प्रणेता भक्तशेखरस्त्यागराजश्च रामनाम्नस्सङ्कीर्तनमेव शाश्वतश्रेयसो हेतुरिति मुक्तकण्ठमुदघोषयन् ।

श्रीरामरामरामेति रामनाम्नस्त्रिरुच्चारणेन विष्णुसहस्रनामपारायणजं पुण्यमुच्चारयिता लभेतेति सुदृढो विश्वासस्साम्प्रदायिकानाम् ।

तदुक्तम्-"श्रीराम राम रामेति रमे रामे मनोरमे
सहस्रनामतस्तुल्यं रामनाम वरानने' इति ।

एवंविधपवित्रनामपरिगतस्य रघुकुलजलधिसोमस्य सकल-सुगुणाभिरामस्य चरितं रामायणम्। इदं च सकलदोषलतालवित्रं परमपवित्रं च। अस्य प्रत्यहं पारायणं, अश्वमेधयागजन्यफलं वितरति। अतो भारतीयैस्सर्वैस्सकलधर्माणामाकरं, आदिकविप्रणीतमादि-काव्यं श्रीमद्रामायणं अवश्यं पठनीयमादरणीयं च ।

अत एवोक्तं भवोपगतभूतिना भवभूतिना—

"पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा
माङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
तामेतां परिभूषयन्त्वभिनयैर्विन्यस्तरूपां बुधा
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम्" ॥

# “गद्यं कवीनां निकषं वदन्ति”

काव्यं द्विविधं, दृश्यं श्रव्यं चेति । श्रव्यकाव्यं पद्यात्मकं गद्यात्मकमिति द्वेधा विभज्यते । अपादः पदसङ्घातो गद्यमित्युच्यते । गदितुं योग्यं गद्यम् । “गद व्यक्तायां वाचि” इत्यस्माद्धातोः, ‘गदचर यमश्चानुपसर्गे” इति सूत्रेण कर्मणि यत्प्रत्ययः । यद्वा, ‘स्तनगदी देवशब्दे” इति चौरादिकाण्णिजन्तात् “अचो यदिति” सूत्रेण यत्प्रत्यये सति, गद्यमिति रूपम् । देवैश्शब्दनीयं गद्यमिति । पादेषु भवं पद्यम् । शरीरमिति विवक्षायां, “शरीरावयवाच्च” इति भवार्थे यत्प्रत्यये, भसंज्ञायां पदादेशे च सति पद्यमिति रूपम् । पादवान् पदसङ्घातः पद्यमित्युच्यते । गद्यपद्ये उभे अपि कवीनां रचनाया अनुकूले । कश्चित्कविः हृद्यं पद्यं गोस्तनीद्राक्षया तुल्यं कथयति । अनवद्यं गद्यं च मधुना तुल्यं वदति । गद्यपद्यात्मकं चम्पूप्रबन्धं मधुनि निक्षिप्तैर्द्राक्षाफलैस्तुल्यं कथयति ।

पद्यं बालानां विषयधाराणायातीवोपयुज्यते । अल्पेनैव यत्नेन छन्दसामवलम्बेन च, पद्यं सहृदयानामानन्दाय सम्पद्यते । पद्ये समुचितविशेषणानामभावः, छन्दोमूलक इति वक्तुं शक्यते । प्रबन्धे सामग्रयेण स्फुरन्नपि रसः पद्येनैकेनैव रसिकामोदमुपजनयति । संस्कृतभाषायां सर्वासु सारस्वतप्रक्रियासु प्रथमतः पद्यमेवोपयुक्तम् । भारतीयानां प्रथमसाहित्यमृग्वेदः पद्यमय एवेति सर्वेषां नन्वविदितः । आदिकाव्यं वाल्मीकिप्रणीतं रामायणमपि पद्यकाव्यमेवेति न न हि विदितो विषयः । तर्कव्याकरणवेदान्तमीमांसादिशास्त्रग्रन्था अपि केचित् पद्यरूपेणैव रचिताः । कथासरित्सागरादिकं कथासाहित्यमपि पद्यैरेव निर्मितम् । राजतरङ्गिणीनामकं राज्ञां चरित्रमपि पद्येष्वेव कल्हणेन रचितम् । एवं वैदिकलौकिकात्मना द्विविधमपि संस्कृतसाहित्यं पद्यस्य विषय इति नाप्यतिशयोक्तिार्नवात्युक्तिः । किं बहुना ! प्राचीनसंस्कृतसाहित्यविदां पद्यरचनायां तथा प्रीति-

रवर्धंत, यथा गद्ये रचितमपि, यदर्थं बोधयितुमसमर्थं तद् गणितशास्त्रमपि पद्यैरेव निरमीयतेति । प्राचीनकाले—

का त्वं बाले ? काञ्चनमाला, कस्याः पुत्री ? कनकलतायाः ।
हस्ते किं ते ? तालीपत्रं, का वा लेखा ? क ख ग घ ।।

कालिदासस्य कयाचन बालया सह सम्भाषणमिदम् ।

कस्त्वं ? कुतोऽसि ? कुत्रत्यः ? किमुद्दिश्य समागतः ?

इति दैतेयपतिना पृष्टः पावनिरब्रवीत् ।

इति हनुमद्रावणसंभाषणम् ।

कस्त्वं भोः ? कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि, साधु विदितं, कस्मादिदं, कथ्यते ।
वामेनात्र वटस्तमध्वगजनस्सर्वात्मना सेवते ।
न च्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे ।।

इत्यादिकं विरागिणः कस्यचित् शाखोटकेन सह सम्भाषणमपि पद्येनैव निर्व्यूढमित्यहो अस्थान एषां पक्षपातः !

गद्यं छन्दसामालम्बेन न प्रवर्तते । रचयितुश्छन्दोऽनुसारेणैव प्रवर्तते । उपक्रमात्प्रभृत्युपसंहारपर्यन्तं, सम्यगुपनिबध्यमानं सदेव गद्यं, सचेतसां सम्मोदाय सम्पद्यते । ललितपदं हृदयङ्गमं गद्यं मुक्तावलयमिव सुमनसां मनांस्याकर्षति । प्रतिभावता विरचितं गद्यं सहृदयानां कर्णयोरमृतमभिवर्षति । विषयं सम्यगुपपादयति । स्मृतिमता चित्रकारेण रचितं चित्रं नयनयोरिव श्रवणयो रतितमां प्रीतिमुत्पादयति । सम्भाषणाय गद्यं यथा सम्यगुपयुज्यते न तथा पद्यम् । नित्यकृत्यनिर्वहणाय शास्त्रार्थकरणाय, चरित्ररचनाय, विमर्शनाविनोदाय कथाकथनाय, मनोगताभिप्रायप्रकटनाय, वार्तानि-

वेदनाय च गद्यं यथा प्रभवति न तथा पद्यम्। एवं विचार्यमाणे पद्यरचनातो गद्यरचनायां सहृदयानां निर्भरामोद इति स्फुटीभवति। षोडशवर्णस्य सुवर्णस्य विशुद्धि विज्ञातुं यथा निकषोपलः काङ्क्ष्यते, तथा कवेरप्रतिभां प्रतिभां वेदितुं गद्यमेव समर्थं भवति। अत एव युक्तमुक्तमभियुक्तैः–"गद्यं कवीनां निकषं वदन्ति" इति।

एवंविधस्य गद्यस्य किं वा लक्षणमित्युक्तौ, ओजस्समासभूयस्त्वमेतद् गद्यस्य लक्षण" मित्याचार्यदण्डिनो वचनमस्माकं प्रमाणं भविष्यति। वर्णनासु दीर्घसमासभूयस्त्वरूप ओजोगुणो गद्यकविभिरादियते। भावाविष्करणे तु पृथक्पदत्वरूपं माधुर्यं कविभिरङ्गीक्रियते। मध्यमसमाससहितत्वरूपः प्रसाद ऊरीक्रियते। अत एवोक्तं विपश्चिदपश्चिमेन वामनेन—"गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च। "पद्यभागवद् वृत्तगन्धि"। 'अनाविद्धं ललितपदं चूर्णम्।' विपरीतमुत्कलिकाप्रायम्" इति, वृत्तगन्धि चूर्णमुत्कलिकाप्रायं चेति त्रिविधं गद्यम्। पद्यस्य भागाः पद्यभागाः तद् यद् वृत्तगन्धि। यथा "पातालतालुतलवासिषु दानवेषु"। अत्र हि वसन्ततिलकाख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते। यथा वा "श्मशानचरिशित्वमपीह लिङ्गम्" अत्र तु इन्द्रवज्राख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते। अनाविद्धानि अदीर्घसमासानि ललितान्यनुद्धतानि पदानि यस्मिस्तदनाविद्धललितपदं चूर्णम्" इति। यथा–"अभ्यासो हि कर्मणां कौशलमावहति। न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति" इति। उत्कलिका–उत्कण्ठा, तस्याःप्रायः प्रयोगबाहुल्यम् यस्मिस्तत्, उत्कलिकाप्रायं गद्यम्। यस्मिन् श्रूयमाणे, श्रोतॄणामुत्कण्ठा बहुका भवतीत्यर्थः। विपरीतमाविद्धोद्धतपदमुत्कलिकाप्रायम्। यथा–'कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि" इति। वास–सुबंधुः

प्रथमतः, कृष्णयजुर्वेदे, ब्राह्मणेषु, श्रुतीना मितरेषु भागेषु, शास्त्रेषु च, गद्यमुपनिबद्धम्। बुधास्वाद्यं गद्यमाशं समानानां विमर्श-

कानां तृप्तये, गद्यरचयितारो विशिष्टलक्षणलक्षितान् गद्यनिबन्धान्निबबन्धुः। अनेकविशेषविशिष्टाः, दीर्घसमासभूयिष्ठा रचनास्तैः परमाद्रियन्त। वर्णनासु वाक्यानि त्वयथार्थदीर्घतां प्रापितानि। वर्णनाधिक्यं, कथनाल्पत्वं, चेष्टाभावश्च गद्यस्य मुख्यलक्षणान्यभूवन्। आख्यायिका कथा चेति गद्यग्रन्थाः प्राधान्येन द्वेधा विभक्ताः। तयोः लक्षणादिकं ग्रन्थविस्तरभयादत्र नोच्यते।

गद्यमिदमुपयुक्तमभूल्लौकिकवाङ्मयकाले, ततोऽपि प्राचीने भगवत्पतञ्जलिविरचिते महाभाष्ये (१५० B.C) रुद्रदाम्नः (१५० A.D) हरिषेणस्य (३४५ A.D) इतरेषां च शासनेषु। निर्मितानि तानि शासनानि च सालङ्कारायां शैल्याम्, या शैली क्रिस्त्वब्दीयसप्तमशतके निवसतो बाणस्यानुकरोति। वासवदत्ता सुमनोत्तरा भैमरथी चेति ख्यातानि गद्यकाव्यानि पतञ्जलिना स्मृतानि। चारुमतीनामकं गद्यप्रबन्धं वाक्यकारो वररुचिः रचयामास। रामिलसोमिलौ च शूद्रककथां रचयामासतुरिति च कथ्यते। आढ्यराजभट्टारहरिचन्द्रौ गद्यरचनायां प्रसिद्धाविति बाणभट्टेनाभिहितम्। एते सर्वे प्रबन्धा, नास्माकं हस्तयोः पतिताः।

बाणभट्टः प्राचीनतमो गद्यरचयिता, यस्य कृतयोऽस्माभिरिदानीमुपलभ्यन्ते। श्रीवत्सगोत्रोद्भवस्य चित्रभानो राजदेव्याश्च तनयोऽयम्। शोणनदनिकटवर्तिनि पृथुकूटे कविरयं न्यवात्सीत्। अस्य बाल्य एव माता परलोकमगात्। प्राप्ते च चतुर्दशेवर्षे पितापि दिवं जगाम। भर्त्सुरित्यस्य कश्चिद्गुरुरासीत्। विद्याग्रहणानन्तरं कविरयं भुवं परिबभ्राम। अस्मिन् समयेऽस्य बहवस्सहचरा अभूवन्, येषु कलासु विचक्षणाः विद्यासु निपुणाः क्रियासु कुशलाश्च बभूवुः। विद्योपार्जनं बुद्धिकुशलतां चासाद्य कविरयं गृहान् प्रतिन्यवर्तत। कस्मिंश्चिद्दिने राज्ञा हर्षवर्धनेन निजास्थानीं प्रत्याकारितः। तदाज्ञया तदास्थानीं गतः कविरयं तेनाभिनन्दितः पूजितश्च, सद्य एवास्थानपण्डितपदवीं प्रापितः। तत्पदव्या बाणभट्टः, बाणभट्टेन तत्पदवी च

व्यराजत । एवं बहुवत्सरपर्यन्तं राजानुग्रहमनुभूय स्वग्रामं प्रति प्रतिनिवृत्तोऽयं सुचिरं सुखमुवास । स्वरचिते हर्षचरिते बाणेन वृत्तान्तोऽयं श्रावितः । क्रीस्तोःपरं ६०६ तमे वर्षे हर्षस्सिंहासनमारूढवान् । एतत्कालानन्तरमपि बाणो हर्षसभायामासीत् । तस्मादस्य साहित्यकृषेः कालः क्रिस्त्वब्दीयसप्तमशतकस्य पूर्वार्धमिति शक्यं निश्चेतुम् ।

कादम्बरी हर्षचरितमिति द्वौ गद्यप्रबन्धौ देवीशतकमिति भक्तिरसप्रधानं काव्यं च निर्माय कीर्तिं प्रतीष्ठां च लेभे । अत्यन्तविलक्षणेऽस्मिन् जगति कवयः काश्चिद्वर्णना विदधति । काश्चिद्वर्णनाविजहति । भारतीहृदयपञ्चबाणो बाणस्तु याः काश्चिदपि न विजहाति । पर्वतपरमाणू, पल्लीपत्तने, अटवीजनपदे, शुकशुनकौ, हस्तिमशकौ, राजकुल-योगिकुले, चण्डिका-चाण्डाल्यौ, भूपति-भिक्षुकौ, जननमरणे च वर्णयति । किं बहुना ? किमस्ति वस्तु यन्नानेनवर्णितम् । काव्यसौन्दर्यस्य सन्धायकं सर्वं वस्तुजातं वस्तु तोऽस्कथावस्तु जातम् । ईदृशो वर्णनानिपुणः कविः किमस्ति ? किमभूत् ? किं भविष्यति ? नास्ति नास्त्येव भूतले, इति वक्तव्यम् । अत एव "बाणोच्छिष्टं जगत्सर्वं" मिति "कादम्बरीरसज्ञानामाहारोऽपि न रोचते" इत्याभणके जगति प्रसिद्धिमुपगते ।

बाणो निपुणो गद्यरचयिता । अस्य नैपुण्यं प्रदर्शयितुं कादम्बर्या अत्र केचिद्भागा उद्ध्रियन्ते ।

विन्ध्याटवीवर्णने—"प्रावृडिव घनश्यामला, अनेकशतह्रदालङ्कृता च, सततमृक्षसार्धानुगता, हरिणाध्यासिता च, राज्यस्थितिरिव चमरमृगवालव्यजनोपशोभिता, समदगजघटापरिपालिता च, गिरितनयेव स्थाणुसङ्गता, मृगपतिसेविता च, जानकीव प्रसूतकुशलवा, निशाचरपरिगृहीता च, कामिनीव चन्दनमृगमदपरिमलवाहिनी, रुचिरागुरुतिलकभूषिता च, क्वचिन्नारायणमूर्तिरिव तमाल-

नीला, क्वचिद्विराटनगरीव कीचकशतावृता, क्रूरसत्त्वापि मुनिजन-सेविता, पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम ।

उपमा, श्लेषः, उत्प्रेक्षा, विरोधाभासः, इत्येतेषामलङ्काराणां योजनेनेयं वर्णना वर्णनानिपुनेन बाणेन सम्यक् साधिता प्रसाधिता च । उपयुक्तं चात्रोत्कलिकाप्रायं गद्यम् ।

उपर्युक्तालङ्कारेभ्यो व्यतिरिक्ततया वर्णनासु परिसंख्या मप्ययमुपयुङ्क्ते । यथा–भगवतो जाबालिमहर्षेराश्रमवर्णने––यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागश्शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनस्सु, चक्षूरागः कोकिलेषु, न परकलत्रेषु मुनिबालनाशः क्रतुदीक्षया न मृत्युना, रामानुरागो रामायणेन, न यौवनेन, महाभारते शकुनिवधः, पुराणे वायुप्रलपितम्, वयःपरिणामेन द्विजपतनम् कपीनां श्रीफला-भिलाषः, मूलानामधोगतिः ।

वसन्तर्तुवर्णनसन्दर्भे––कोमलपदललितं, सुन्दरभावभरितं सहृदयहृदयरञ्जकं हृद्यं गद्यमवधारयन्तु सावधानम् ।

कोमलमलयमारुतावतारतरङ्गितानङ्गध्वजांशुकेषु मधुकर-कुलकलङ्कालीकृतकालेयकुसुमकुट्मलेषु विकसन्मुकुलपरिमल-पुञ्जितालिजालमञ्जुसिञ्जितसुभगसहकारेषु, उत्फुल्लपल्लवलवली-लीयमानमत्तकोकिलोल्लासितमधुशीकरोद्दामदुर्दिनेषु, प्रोषितजनजाया-जीवोपहारहृष्टमन्मथास्फालितचापरवभयस्फुटितपथिकहृदयरुधिरार्द्री-कृतमार्गेषु मधुमासदिवसेषु··········

सरसं सुन्दरं सालङ्कारं चेदं वाक्यं न कस्य विस्मयमुत्पाद-यति ? क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयौवनेन पदम् ।"

उदाहरणार्हश्शुकनासोपदेशो न केवलं चन्द्रापीडस्य, किन्तु, श्रीमतां सर्वेषामप्यजरामरसन्देशः, जिह्वायां श्रवणे हृदये च निवेशनीय उपदेशः, शिरसा धारणीय आदेशश्च। अत्र श्रवणगोचराणि क्रियन्तामुपदशान्युपदेशवाक्यानि।

"गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुष शक्तित्वं चेति महतीयं खल्वनर्थपरम्परा, सर्वाविनयानामेकैकमप्येषामायतनम्, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततदुरन्तेयमुपभोगमृगतृष्णिका। नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः, पुरुषमत्यासङ्गो विषयेषु। भवादृशा एव भवन्ति भाजनान्युपदेशानाम्।"

भावाविष्करणसमये समासरहितां मृदुलां मधुरां च भाषामयमुपयुङ्क्ते। चूर्णं नाम गद्यप्रभेदोऽत्रावलोक्यते। पश्यत-शबरसेनां पश्यत, शुकस्य मनसि जातं भावं विवृण्वन्, एवं रचयति—

"आसीच्च मे मनसि—"अहो! मोहप्रायमेतेषां जीवितं साधुजनविगर्हितं च चरितम्। तथा हि—पुरुषपिशितोपहारे धर्मबुद्धिः। आहारस्साधुजनविगर्हितो मधुमांसादिः, श्रमो मृगया, शास्त्रं शिवारुतम्। समुपदेष्टारस्सदसतां कौशिकाः। प्रज्ञा शकुनिज्ञानम्। परिचिताश्श्वानः। राज्यं शून्यास्वटवीषु। आपानकमुत्सवः, मित्राणि क्रूरकर्मसाधनानि धनूंषि, सहाया विषदिग्धमुखा भुजङ्गमा इव सायकाः। गीतमुत्सादकारि मृगाणाम्। कलत्राणि बन्दीगृहीताः परयोषितः। क्रूरात्मभिश्शार्दूलैस्सह संवासः। पशुरुधिरेण देवतार्चनम्। मांसेन बलिकर्म, चौर्येण जीवनम्, भूषणानि भुजङ्गमणयः, वनकरिमदै रङ्गरागः। यस्मिन्नेव कानने निवसन्ति तदेवोत्खातमूलमशेषतः कुर्वते" इति।

बाणभट्टस्य गद्यरचनायां वर्णनासु दीर्घसमासा, कथाकथने मध्यमसमासा, भावाविष्करणे असमासा चेति रसानुगुणा त्रिविधा संघटना दृश्यते । अनेन पाञ्चालीरीतिरादृता । कल्पनाशक्तिरस्य सहृदयानन्दिनी भवति । शैली च समीचीना दृश्यते । अस्पष्टार्थानामनेकार्थकपदानां प्रयोगः काव्यस्यास्य शोभां नैवापाकरोति । इदमत्रावधेयं यत्—यदा विमर्शकानां सुनिशितैर्विमर्शैरितरेषां बहूनि काव्यानि दोषबहुकान्यभूवन्, तदा बाणस्य तदितरेषां च केषाञ्चित्काव्यानि दोषरहितानि व्यराजन्त । बाणस्त्वसाधारण्येन महान्तं शब्दकोशं धारयति । दीर्घवाक्यानां प्रयोग इव अल्पवाक्यानामपि प्रयोगेऽयं निपुणः । वर्णनासूपयुक्ता दीर्घसमासास्सम्भाषणेषु नैव दृश्यन्ते । एवमन्यूनाभ्यधिकां शैलीमयं प्रवर्तयति । अर्थानुगुणां शैलीमयमादत्ते । न केवलमयं प्रसिद्धानामुपमारूपकोत्प्रेक्षाद्यलङ्काराणां विनिवेशने निपुणः, अप्रसिद्धानामाक्षेप-विरोधाभास-परिसंख्या-वक्रोक्त्यादीनामपि विनिवेशने निपुणः । हर्षचरितस्य शैलीं तु कादम्बरीशैल्या न्यूनामाचक्षते विचक्षणाः । दुर्दैववशात्कादम्बरीमपूरयित्वैव बाणे दिवं गते, तत्तुल्यस्तत्तनयो भूषणबाणः कादम्बर्या उत्तरार्धं, पूर्वार्धगतशैलीमेवादाय पूरितवान् ।

बाणानन्तरं दण्डी गणनीयो गद्यरचयिता । अयं महाकवेर्भारवेः प्रपौत्रः । दण्डीति पदं बिरुदमिव लक्ष्यते । अयं दशकुमारचरिताख्यं गद्यप्रबन्धं काव्यादर्शाख्यमलङ्कारनिबन्धं च रचितवान् । छन्दोविचितिरप्यनेन रचितेति केचिद्वदन्ति । अपरे तन्नाङ्गीकुर्वन्ति । दशकुमारचरितं कादम्बर्या अनन्तरं गणनीयो गद्यप्रबन्धः । अयं त्रिभिर्भागैस्सहित इदानीमुपलभ्यते पूर्वपीठिका-प्रधानग्रन्थ-उत्तरपीठिका चेति । प्रथमभागे पञ्चोच्छ्वासाः, द्वितीयभागे अष्टावुच्छ्वासाश्च सन्ति । तृतीयभागे न सन्त्युच्छ्वासाः ।

अस्मिन् काव्ये मगधनायकस्य राजहंसस्य मानिना मानसारेण पराजयः, वने प्रवासः, यत्र वने स्वतनयो राजवाहनः नवभि-

स्स्वमित्रैस्साधं वर्धमान आसीत्, ये च केचन मन्त्रिणां राज्ञां च तनया आसन्। दशापि राजकुमारा दिग्विजययात्रायै प्रतस्थिरे। ते च पृथग्भूता एकैकां दिशं जग्मुः। कतिपयवत्सरापगमे च, बहूनि साहसकृत्यान्यनुष्ठाय राजकुमारा एकत्र मिलिता अभूवन्। जैत्रयात्रायां स्वविक्रमविलासचेष्टितानि ते परस्परं कथयाम्बभूवुः। महता प्रयत्नेन कुमारास्सर्वेऽपि राजहंसस्य शत्रुं पराभूय मगधराज्यं पुनरर्जयामासुः। अयमस्य कथासारः।

विभिन्नेषु त्रिषु कालेषु विभिन्नैः कर्तृभिः, इमे त्रयो भागा रचितास्स्युः। शैलीविषये प्रथमचरमभागौ मध्यमभागादपकृष्टावित्यत्र न कोऽपि संशीतिलेशः।

दण्डिनो रचनायां पदलालित्याख्यो ललितपदबन्धो विलोक्यते विशेषतः। यथा-"अस्ति समस्तनगरीनिकषायमाना शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी। तत्र वीरभटपटलोत्तुङ्गतरङ्गकुञ्जरमकरभीषणसकलरिपुगणकटकजलनिधिमथनमन्धरायमाणसमुद्दण्डभुजदण्डमण्डनः, पुराङ्गणवनविहरणपरायणतरुणगणिकाजनजेगीयमानयातिमानया शरदिन्दुकुन्दघनसारनीहारमृणालमरालसुरगजनीरक्षीरगिरिशाट्टहासकैलासकाशनीकाशमूर्त्या रचितदिगन्तरालपूर्त्या कीर्त्याऽभितस्सुरभितः, स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलायितधरणीरमणो सौभाग्यभोगभाग्यवान्, अनवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासम्भार भासुरभूसुरनिकरः, विरचितारातिसन्तापेन प्रतापेन सततुलितवियन्मध्यहंसो राजहंसो नाम धनदर्पकन्दर्पसौन्दर्यसोदर्यहृद्यनिरवद्यरूपो भूपो बभूव।"

अत्र ललितपदबन्धः दीर्घसमासभूयिष्ठता उपमारूपकाद्यर्थालङ्कारगुम्फनं, वृत्त्यनुप्रासादिशब्दालङ्कारविनिवेशननैपुण्यं चेति गद्यस्य यानि लक्षणानि तानि विलोक्यन्ते।

"कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः" इतीदं वाक्यं हृद्यगद्यरचनायां दण्डिन आसक्तिं शक्तिं च निवेदयति।

"तत्र तत्र मलयमारुतान्दोलितशाखानिरन्तरसमुद्भिन्नकिसलयकुसुमफलसमुल्लसितेषु, रसालतरुषु, कोकिलकीरालिकुलमधुकराणामालापान् श्रावं श्रावं किञ्चिद्विकसदिन्दीवरकल्हारकैरवराजीवराजीकेलिलोलकलहंससारसकारण्डवचक्रवाकचकलरवव्याकुलविमलशीतलसलिलललितानि सरांसि दर्शं दर्शममन्दलीलया ललनासमीपमवाप।"

अस्मिन् वाक्ये पदलालित्यं समासभूयस्त्वं ग्राम्यवृत्त्यन्तर्भूतस्य लकारस्यासकृदुपनिबन्धनं सरोवरस्थितानां नानाविधानां कुसुमानां विहगानां च गुम्फनं च सहृदयानां हृदयान्यानन्दयन्ति।

सकलगुणगुम्फितां शोभनवर्णां रसभरितां भावोज्ज्वलां च आचार्यदण्डिनो वर्णनामवलोकयामः। यथा-

"यो वसन्तसहायेन समुत्सुकतया रतेः केलीसालभञ्जिकाविधित्सया कञ्चन नारीविशेषं विरच्य, आत्मतः क्रीडाकासारशारदारविन्दसौन्दर्येण पादद्वयं, उद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या लीलालसगतिविलासं, तूणीरलावण्येन जङ्घे, लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगम्, जैत्ररथचातुर्येण घनं जघनं, किञ्चिद्विकसल्लीलावतंसकल्हारकोरककोटरानुवृत्या गङ्गावर्तसनाभिं नाभिं, सौधारोहणपरिपाट्या वलित्रयं, मौर्वीमधुकरपङ्क्तिनीलिमलीलया रोमावलिं, पूर्णसुवर्णकलशशोभया कुचद्वन्द्वं, लतामण्डपसौकुमार्येण बाहू, जयशङ्खाभिख्यया कण्ठम्, कमनीयकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बीकृतबिम्बं रदनच्छदम्, बाणायमानपुष्पलावण्येन शुचिस्मितम्, अग्रदूतिकाकलकण्ठिकाकलालापमाधुर्येण वचनजातम्, सकलसैनिकनायकमलयमारुतसौरभ्येण निश्श्वासपवनम्,

जयध्वजमीनदर्पेण लोचनयुगलं चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदस्सुधाकरस्यापनीतकलङ्कया कान्त्या वदनं, लीलामयूरबर्हभङ्ग्या केशपाशं च विधाय, समस्तमकरन्दकस्तूरिकासम्मितेन मलयजरसेन प्रक्षाल्य कर्पूरपरागेण सम्मृज्य निर्मितेव रराज ।

अतिशयितामरसुन्दर्यास्सर्वाङ्गसुन्दर्या अवन्तिसुन्दर्या आपादचूडवर्णनं महाकविना दण्डिना विहितं, लोकोत्तरेण विधानेन । ललितपदबन्धनवती, अचुम्बितार्थसम्पत्तिरपि नूनमनेनात्र प्रदर्शिता । अद्भुता कल्पनाशक्तिर्निरुपमं भावनाबलं च निरूपितम् । अस्य, ईदृशीर्वर्णनाः पश्यतामस्माकं ललितपदबन्धने कल्पनायां चानुपमो गद्यकविरयमित्यभिप्रायो भवत्येव ।

सहृदयानन्ददायिनी मृदुमधुरगम्भीरमनोहरा च रचनाशैली सर्वत्रानेन प्रवर्तिता, या खलु सकलजनमनो विनोदयति—

"सकललिपिज्ञानं, निखिलदेशीयभाषापाण्डित्यं षडङ्गसहितवेदसमुदायकोविदत्वं काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथासहितपुराणगणनैपुण्यं धर्मशब्दज्योतिस्तर्कमीमांसादिशास्त्रनिकरचातुर्यं, कौटिल्यकामन्दकीयादिनीतिशास्त्रपटलकौशलं वीणाद्यशेषवाद्यदाक्ष्यं सङ्गीतसाहित्यहारित्वं मणिमन्त्रौषधादि मायाप्रपञ्चचुञ्चुत्वं मातङ्गतुरङ्गादिवाहनारोहणपाटवं, विविधायुधप्रयोगचणत्वं, चौर्यदुरोदरादिकपटकलाप्रौढत्वं च तत्तदाचार्येभ्यस्सम्यग् लब्ध्वा यौवनेन विलसन्तं कृत्येष्वनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभस्सोऽहं शत्रुजनदुर्लभ इति परमानन्दमविन्दत ।"

अस्मिन् भागे दण्डी क्रिस्त्वब्दीय सप्तमशतकप्रवृत्तां राजकुमाराणां विद्याभ्यासरीतिं निरूपयितुं प्रवृत्तः । अनवीकृतत्वदोषं दूषयितुकामः, सर्वेषु वेदेषु सर्वासु कलासु नैपुण्यं लब्धमिति वक्तव्ये, उक्तिवैचित्र्यवपुर्माधुर्यमिति वामनेनाभिहितं माधुर्यगुणमुपयुञ्जानः

स्वरचनां प्रावर्तयत्, येन गुणेन श्रोतुर्न भवति क्लेशः, जायते च महानानन्दः ।

एभिर्निदर्शनैर्दण्डी गणनीयो गद्यकविरिति मे प्रतिभाति ।

शेमुषीसिन्धुस्सुजनबन्धुस्सुबन्धुर्हृद्यंवासवदत्ताख्यं गद्यप्रबन्धं रचयामास, यः प्रत्यक्षरश्लेषेण बन्धुरः। हर्षचरिते बाणभट्टेन स्मृताया वासवदत्ताया इयमन्यैव । पतञ्जलिना स्मृता वासवदत्ता बाणेन स्मृता स्यात् या खल्वाख्यायिका ।

अस्यां कथेयमुपवर्णिता । कन्दर्पकेतुर्नाम, कश्चिद्युवराजः, स्वप्नोपलब्धां तां समागन्तुमाचकांक्ष । वासवदत्तानाम्नी भर्तृदारिकापि स्वप्ने प्रत्यक्षीकृतेन, तेन सह समागममाचकांक्ष । तदानयनार्थं प्रेषितया दूतिकया समानीतो युवराजः, भर्तृदारिकाया नगरीं प्रविश्य तया सह यत्र कुत्रापि पलायत । कन्यायाः पितुस्सैन्येनानुसृतौ इमौ प्रियौ प्रतिषिद्धप्रवेशमुद्यानं प्राविशताम्, यत्र युवति शिशलामास, युवा चात्मनो वधं कर्तुमुद्यत आसीत् ।—अत्रान्तरे, अचिरादेव युवत्या सह तवावश्यं समागमो भविष्यतीति काचन दिव्यवाणी निवारयन्ती तं तत्प्रयत्नादाकर्णिता । अनुभूयमानविरहव्यथो यथाकथञ्चिदुद्याने, स कञ्चन कालमतिवाहयामास । यदृच्छया कदाचिदयं जातप्रीतिरिमां शिलामालिलिङ्ग, यस्या युवतिररतिरमणीयाकृतिराविरासीत् । एवं तयोस्सौख्यावहः पुनस्समागमो बभूव । इति ।

अनेन कविना कृतिरियं गौडीरीतावुपनिबद्धा । अस्याः रचनायां प्रायशस्सर्वत्रापि भङ्गमार्गसुन्दरः प्रत्यक्षरश्लेषः प्रत्यक्षीभवति । "अयं च गद्यकविः सुबन्धुरनादृत्य रसवस्तुनि श्लेषप्रयोगेणैव परं वर्णनायां कौतूहलमावहति। प्रतिवस्तुवर्णनं च श्लेषेण बह्वीरुपमा, उत्प्रेक्षा रूपकाणि चालङ्कारान्निर्वहति । बहूनि पदानि श्रोतृदुस्सहं प्रयुञ्जानोऽप्ययं तावतैव कृतार्थमात्मानं मन्यते । स्वस्य प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासवैदग्ध्यं तत्र ]च सरस्वतीप्रसादं सामोदमावेदयति ।

इति वासवदत्ताभूमिकायां अभिनवभट्टबाणः कृष्णमाचार्यस्स्वाभिप्राय-मावि‌ष्करोति ।

भूयसा च गद्यकवीनां पद्यानि न भवन्ति सम्यञ्चि । अस्य तु पद्यान्यतीव हृद्यानीति सहृदयानां पठनानुपदमेव प्रतिभायात् । पश्यत तस्य पद्यानां हृद्यताम्—

खिन्नोऽसि मुञ्च शैलं
बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु
गोपेषु हसन् हरिर्जयति ॥

अत्र शब्दार्थावुभावपि महान्तं चमत्कारमुपजनयतः । अत एव साहित्यपयोनिधिमथनदक्षैर्दीक्षितैरपि श्लोकोऽयं विषमस्योदा-हरणतयोपन्यस्तः ।

विषधरतोऽप्यतिविषमः
खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी
स कुलद्वेषी पुनः पिशुनः ॥

श्लोकोऽयं शब्दार्थचमत्काराभ्याँ सह श्लेषव्यतिरेकावपि धारयति ।

हस्त इव भूतिमलिनो
यथा यथा लङ्घयति खलस्सुजनम् ।
दर्पणमिव तं कुरुते
तथा तथा निर्मलच्छायम् ।

अत्र भूतिमलिनस्य हस्तस्य खलेन साम्यं, सुजनस्य दर्पणेन साम्यं च सम्यगत्र निर्व्यूढमिति अर्थस्फुरणमत्र प्रशंसनीयम् ।

एवं हृद्यानां पद्यानां निर्माणे मार्मिकोऽयं गद्यकविर्गद्यरचनायां महाकविं बाणं सर्वात्मनानुकुर्वन्नपि प्रत्यक्षरश्लेषस्वीकारेणात्मनो महान्तं विसंवादमाविष्करोति ।

पश्यत तस्य वर्णनापद्धतिम्--

'अभूदभूतपूर्वः, सर्वोर्वीपतिचक्रचारुचूडामणिः श्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः, नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः, कृष्ण इव कृतवसुदेवतर्पणः, नारायण इव सौकर्यसमासादितधरणिमण्डलः, कंसारातिरिव जनितयशोदानन्दसमृद्धिः, आनकदुन्दुभिरिव कृतकाव्यादरः ।

विद्याधरोऽपि सुमनाः, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रयः, बृहन्नलानुभावोऽपि अन्तस्सरलः, महिषीसम्भवोऽपि वृषोत्पादी, अतरलोऽपि महानायकः राजा चिन्तामणिर्नाम ।

वृत्त्यनुप्रासेन, गाढाश्लेषेण गूढश्लेषेण अवरोधरहितेन विरोधेन च सहितेयं रचना बाणभट्टमनुस्मारयति ।

यत्र च शासति धरां, छलजातिनिग्रहप्रयोगो वादेषु, नास्तिकता चार्वाकेषु, कण्टकयोगो योगेषु, परीवादो वीणासु, खलयोगश्शालिषु--

"नेत्रोत्पाटनं मुनीनां, राजविरुद्धता पङ्कजानां सार्वभौमयोगो दिग्गजानां सूचिभेदो मणीनां, शूलभङ्गो युवतिप्रसवेषु अग्नितुलाशुद्धिस्स्वर्णानाम् दुश्शासनदर्शनं महाभारते, करपत्रविदारणं जलजानां परमेवं व्यवस्थितम् ।"

पारिसंख्यालङ्कारेण सहितमिदं वर्णनमपि श्लेषाश्लिष्टेन शास्त्रावगाहनपरेण लोकज्ञानसूचकेन पुराणज्ञानमाकलयता सुगुणसिन्धोस्सुबन्धोर्विज्ञानेन विलसितेति वक्तुं नास्ति संशयः । महाकविं बाणंमयमस्मिन्नंशेप्यनुसरति ।

"भास्वतालङ्कारेण, श्वेतरोचिषा स्मितेन, लोहितेनाधरेण, सौम्येन दर्शनेन, गुरुणा नितम्बेन, सितेन हारेण, शनैश्चरेण पादेन, तमसा केशपाशेन, विकचेन लोचनोत्पलेन, ग्रहमयीव स्थितां अष्टादशवर्षदेशीयां कन्यामपश्यत्स्वप्ने ।"

अत्र सूर्यस्वरूपैः प्रकाशमानैरलङ्कारैः, चद्रस्वरूपेण सितेन मन्दहासेन, कुजरूपेण लौहित्ययुक्तेन रूपकेन, बुधग्रहरूपेण सुन्दरेणावलोकनेन, बृहस्पतिस्वरूपेण अतिघनेन जघनेन, शुक्रग्रहरूपेण अवदातेन मुक्तावलयेन, शनिग्रहरूपाभ्यां मन्दमन्दसञ्चारिचरणाभ्यां, राहुरूपेण अलिनीलवर्णेन केशपाशेन, केतुरूपाभ्यां, विकसिताभ्याम् उत्पलसदृशाभ्यां लोचनाभ्यां च, सूर्यचन्द्रकुजबुधबृहस्पतिशुक्रशनिराहुकेतुरूपैर्ग्रहैस्तत्तदवयवेषु, अभेदं परिकल्प्य, स्वप्नदृष्टां सर्वाङ्गसुन्दरीं कन्यां ग्रहमयीमुत्प्रेक्षितवान् । इयमुत्प्रेक्षा प्रेक्षावताममन्दमानन्दमुपजनयतीत्यत्र न कस्यापि संशीतिलेशः । शताधिकग्रन्थकर्ता बहुग्रन्थद्रष्टा गुणग्राही चाप्पदीक्षितः, सौन्दर्यातिशयेन हृतहृदयश्चित्रमीमांसायामिमामुत्प्रेक्षामुदाजहार ।

अन्यत्रायं लेखिनीमेवं प्रसारयति–"नायमुपदेशकालः, पच्यन्त इव मे अङ्गानि, क्वथ्यन्त इवेद्रियाणि, भिद्यन्त इव मर्माणि, निस्सरन्तीव प्राणाः, उन्मील्यन्त इव विवेकाः, नष्टेव स्मृतिः, अधुना तदलमनया कथया ।"

मधुरमिदं गद्यं, कविरयं सर्वात्मना बाणमनुसरतीत्यत्र मुख्यं निदर्शनम् ।

इदमपरं मनोज्ञं मलयमारुतवर्णनं हृदि धारयन्तु समवधारयन्तु सततम्–

"चतुष्षष्टिकलाकलापविदग्धमालवनितम्बिनीनितम्बबिम्बसंवाहनकुशलः, सुरतपरिश्रमपरवशान्ध्रपुरन्ध्रीनीरन्ध्रपीनपयोधरभारनिदाघजलकणनिकरशिशिरितो मलयमारुतो ववौ ।"

अस्य कवेर्भावाविष्करणपद्धतिरपि मधुरा, मनोहरा, सरसा, सालङ्कारा सनिदर्शना च ।

"अहो ! प्रजापतेः रूपनिर्माणकौशलम् । मन्ये स्वस्यैव नैपुण्येनैकत्र दर्शनोत्सुकमनसा वेधसा जगत्त्रयसमवायिरूपपरमाणूनादाय विरचितोऽयमिति । अन्यथा कथमिवास्य कान्तिविशेष ईदृशो भवति । वृथैव दमयन्ती नलस्य कृते वनवासवैशसमवाप । मुधैवेन्दुमती महिष्यप्यजानुरागिणी बभूव । विफलमेव दुष्यन्तस्य कृते दुर्वासश्शापमनुबभूव शकुन्तला । निरर्थकमेव मदनमञ्जरी नरवाहनदत्तं चकमे ।" इति बहुविधं चिन्तयन्ती ... ... ।"

अस्मिन् भागे, एकस्थसौन्दर्यदिदृक्षयेवेति कालिदासस्योत्प्रेक्षा स्मृतेव । चाण्डलकन्यकां पश्यतश्शूद्रकस्य मनसि यो भावो बाणेन प्रदर्शितस्तं सर्वात्मनानुकरोति । अत्रेदमवधेयं यत्–'कन्यामवलोकयतः पुरुषस्य भावः कादम्बर्याम्' युवानमवलोकयतो युवत्या भावः वासवदत्तायामुपवर्णितम् इति । विरहार्तानां कासांचन नायिकानामुदाहरणदानमस्य रचनायां नूतनतां प्रदर्शयति ।

इयता प्रबन्धेन एतदुक्तं भवति । यत्–क्रिस्त्वब्दीयसप्तमशतकारम्भवर्ती महाकविर्बाणः विभिन्नाभ्यां शैलीभ्यां कादम्बरीहर्षचरिते व्यरचयत् । माधुर्यौजःप्रसादाख्यगुणत्रयसहितं हृद्यं गद्यं निर्माय गद्यकवीनामग्रगण्यो बभूव । अस्य गद्यनिर्माणचातुरीं दृष्ट्वा विस्मिता विपश्चितो "गद्यं कवीनां निकषं वदन्ति" इत्याभणकं व्याजह्रुः । निस्समाभ्यधिक इति स तत्सम एवेति च कविताकामिनीहृदयपञ्चबाणं बाणं प्रति स्वाभिप्रायमाविरकार्षुः ।

क्रिस्त्वब्दीयसप्तमशतकोत्तरार्धवर्ती आचार्यदण्डी हृदयङ्गमया शैल्या दशकुमारचरितं, अवन्तिसुन्दरीं च रचयामास । अनेनात्र, अल्पेतराः कल्पना अनेकाः कृताः । वीराणामद्भुतानि साहसौदार्यनिरूपकाणि कार्याणि वर्णितानि । वेश्यानां वञ्चनाप्रकारा निरूपिताः ।

जगत्त्रयगमनमुपवर्णितम् । चौर्यदुरोदरादिकपटकलाप्रौढत्वं प्रदर्शितम्। ऐन्द्रजालिकप्रवेशेन स्वाभीप्सितसिद्धिप्रभृतयो बहवोंशा अत्रोपवर्णिताः। पुराणप्रसिद्धे शापशापावसाने प्रदर्शिते। महाकविं बाणं अंशेनायमनुसरन्नपि, वर्णनासु, भावाविष्करणे कथाकथने च स्वतन्त्रतामयं बिभर्ति । बाणानन्तरमयं गणनीयो गद्यकविः ।

शेमुषीसिन्धुस्सुजनबन्धुर्वासवदत्तां नाम कथां व्यरीरचत् । क्वचिन्नारिकेलपाकं, क्वचिदाम्रपाकं चायमुपयुक्तवान् । गद्यनिर्माणे मार्मिकोऽप्ययं हृद्यपद्यरचने परं निपुणः । वर्णनासु, भावाविष्करणे, कथाकथने च दण्डिनोऽप्यधिकतया बाणमयमनुकरोति । "प्रत्यक्षरश्लेषप्रदर्शनेन सहृदयानां हृदयान्युद्वेजयत्यपि "इति केषाञ्चिदभ्यूहः । श्लेषे तस्य महानादर इति स्वयमेवोक्तवान् ।"

प्रत्यक्षरश्लेषमयप्रपञ्च-
विन्यासवैदग्ध्यनिधिं प्रबन्धम् ।
सरस्वतीदत्तवरप्रसाद-
श्चक्रे सुबन्धुस्सुजनैकबन्धुः ॥

यद्यपि दण्डिसुबन्ध्वोरस्ति बाणेन सह भूयान् संवादः, तथाप्ययं संवादो, भिन्नात्मकतया, नान्यसाम्यं त्यजेत्कविरिति वचनात् जनयति पण्डितानां परमामोदम् ।

एवं विभिन्नेषु कालेषु निवसतां गद्यकवीनां प्रबन्धानामवलोडनेन "गद्यं कवीनां निकषं वदन्ती" ति सूक्तेस्सूक्तिमुक्तावल्यां गुम्फनमुचितमेवेति मे प्रतिभाति ।

# कविकुलगुरुः कालिदासः

हृद्यगद्यरचनाचणेन बाणेन–

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

इति प्रशंसितः । कालिदासकवितामाधुर्यावर्जितहृदयैस्सहृदयैः––

पुरा कवीनां गणनाप्रसङ्गे
कनिष्ठिकाधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावा
दनामिका सार्थवती बभूव ॥

इति स्तुतिपात्रीकृतः, पीयूषवर्षापरनाम्ना जयदेवेन–"भासो हासः कविकुलगुरुः कालिदासो विलासः"इति समुपवर्णितश्च महाकविः कालिदासः । सोऽयं–कविकुलगुरुः कालिदासः, सर्वेषु शास्त्रेषु विशारदस्सकलासु कलासु कुशलो वेदवेदान्तवेदाङ्गेषु [कृतपरिश्रमस्सन्नप्रतिमया स्वप्रतिभया त्रीति दृश्यकाव्यानि, त्रीणि श्रव्यकाव्यानि च प्रणीय कूलङ्कषां स्वपाण्डितीं प्रदर्श्य चाभ्रङ्कषां कीर्तिं लेभे । सोऽयं कदा कतमं मण्डलं स्वजन्मता भूषयामासेत्यनिर्धारितो विषयः । कस्य न विस्मयं जनयत्ययं विषयो यत् 'क्रीस्तोः पूर्वमष्टमशताब्दीमारभ्य, क्रीस्तोः परं दशमशताब्दीपर्यन्तं महाकवेरस्य जीवनकाल इति, प्रथमतोऽयं यथाजात इति तदनु कालीप्रसादाल्लब्धवर इति च विमर्शका विवदन्त इति ।

अस्य कालं निर्णेतुमान्तराणि बाह्यानि वा प्रमाणानि नोपलभ्यन्ते । अयं च क्रीस्तोः परं द्वासप्तत्युत्तरचतुश्शततमे वर्षे

(४७२ A.D) न्यवसदिति वक्तुं शक्यम्, यतो हि उपर्युक्तवर्षीयं वत्सभट्टिविरचितमेकं शासनमस्य मधुरायां शैल्यां विरचितमासीत्। बाणोऽप्यनुचकार मधुरां कालिदासशैलीम्। क्रीस्तोः परं चतुस्त्रिंशदुत्तरषट्छततमे वर्षे (६३४ A.D) निर्मिते ऐहोल्शासने कालिदासस्सङ्कीर्तितः। तस्मादिदं शक्यवचनं यत् कालिदासस्य कालः क्रीस्तोः परात् चतुश्शततमवर्षा (४०० A.D) त्परं भवितुं नार्हति इति।

कालिदासो विक्रमसभायां कवीनामन्यतम आसीदित्यस्ति कश्चित्सम्प्रदायः। आधुनिके खगोलविषयके ज्योतिर्विदाभरणमिति प्रसिद्धे ग्रन्थे समुपलब्धश्लोकः कश्चिदस्य मूलं भवति। तदुक्तम्—

धन्वन्तरिक्षपणकामरसिंहशङ्कु-
भेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेस्सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य॥ इति।

एतच्छ्लोकानुसारेण, धन्वन्तरिः, क्षपाणकः अमरसिंहः शङ्कुः, भेताकभट्टः, घटकर्परः, कालिदासः, वराहमिहिरः, वररुचिः इति प्रसिद्धा नवापि विद्वांसो नवरत्नानीति विख्याताः। एतेषु क्षपणक, शङ्कु, भेतालभट्टाः परं नामान्येव। तेषां स्थितिर्नास्माभिर्ज्ञायते। धन्वन्तरि, वररुचि, घटकर्परा नाद्यावध्यभिज्ञाताः। अमरसिंहश्च नामलिङ्गानुशासनस्य प्रणेतेति प्रसिद्धः। अस्य कालो न निश्चितः। क्रीस्तोः परं चतुष्षष्ठयोश्शताब्दयोर्मध्ये (४००–६०० A.D.) अस्य जीवितकालो भवेदिति पण्डितानामभ्यूहः। वराहमिहिरश्च कश्चिज्ज्यौतिषिक आसीत्, यश्च क्रीस्तोः परं सप्ताशीत्युत्तरपञ्चशततमे वर्षे (५८७ A. D.) दिवंगतोऽभूत्। तस्मादयं श्लोकः कवीनिमान्नवापि समकालिकान्निर्णेतुं न प्रभवति। निर्णेष्यति चायं यत्—अनिर्धारितकालस्य विक्रमभूपालस्य सभायामयं कालिदासो न्यवात्सी-

दिति । ज्योतिर्विदाभरणादुद्धृतममुं श्लोकमाश्रित्य, कालिदासविषये बह्वो मार्गास्सूचिताः । विक्रमादित्यबिरुदभाजां राज्ञां सभास्वस्य निवासो निरूपितः । एतद्बिरुदभाजश्चत्वारो राजानः प्रायशोऽदृश्यन्त । तेष्वेक उज्जयिन्याः परिपालकः क्रीस्तोः पूर्वं षट्पञ्चाशत्तमवर्षे (५६ B. C) प्रारब्धस्य विक्रमशकस्य निर्माता । अपरे त्रयश्च द्वितीयश्चन्द्रगुप्तः, प्रथमः कुमारगुप्तः, काश्मीरीयो विक्रमादित्यश्च । भारतीयसम्प्रदायश्च क्रीस्तोः पूर्वं लब्धोदयेन राज्ञा साकं कालिदासस्य सम्बन्धमवगमयति । पाश्चात्यविमर्शकाश्चैनं राजानं कल्पितपुरुषमामनन्ति । क्रीस्तोः परं प्रथमशताब्द्यां वर्तमानस्य शातवाहनस्य गाधासप्तशत्यां दृष्टस्य क्रीस्तोः पूर्वं निवसत एतद्बिरुदभाजो राज्ञःस्थितिर्निस्संशयं निरूप्यते, यतो हि विक्रमशकस्तस्मिन् ग्रन्थे निरूपितः । पाश्चात्यविमर्शकाः गुप्तवंशीयाभ्यां द्वितीयचन्द्रगुप्तप्रथमकुमारगुप्ताभ्यां साकमस्य सङ्गतिमवगमयन्ति । एवं कालिदासकालमधिकृत्य प्रधानौ द्वौ मार्गौ वर्तेते ।

कालिदासप्रणीतेषु ग्रन्थेषु विलोकितानां केषाञ्चन साक्ष्याणामाधारेण क्रीस्तोःपूर्वं चतुर्थशताब्द्यां पञ्चमशताब्द्यां वा, कालिदासस्य स्थितिं साधयितुं यतन्ते केचन सुधियः । कविनानेन प्रयुक्तं दिङ्नागानामिति पदं बौद्धदार्शनिकं दिङ्नागं सूचयति, यश्च बभूव कालिदासस्य प्रतिपक्षी, एतदाधारेण कालिदासोऽपि कालेऽस्मिन्बभूवेति निश्चिन्वन्ति । एतत्साक्ष्यं च साकल्येन न निश्चायकम् । बौद्धदार्शनिकस्य दिङ्नागस्य हैन्दवकवेः कालिदासस्य च मध्ये किन्निमित्तको विवादो जात इति ते निश्चेतुं न पारयन्ति । कुन्दमालाप्रणेतुर्हैन्दवकवेः दिङ्नागस्य सूचना "दिङ्नागाना" मिति पदेन क्रियत इति कथयन्ति केचन भारतीयाः । अस्याभिधानञ्च धीरनाग इति च पठ्यते । क्लेशबहुलश्चास्य रूपकप्रणेतुस्स्वरूपावगमः विचारेचास्य नाटकस्य शैल्याः, यदि भवेद्दिङ्नागो नाटकस्यास्य प्रणेता, सोऽवश्यं कालिदासस्य प्रतिपक्षपदवीमवलब्धुमर्हति । समुचित साक्ष्याभावेन निर्णयममुमभ्युपगन्तुं पदेऽस्मिन् यथार्थतां निरू-

पयितुं वयं न प्रभवामः । दिङ्नागानामिति पदस्य दिग्गजानामित्यर्थोपवर्णनं समुचितमिव नः प्रतिभाति ।

कालिदासप्रयुक्तजामित्रपदाधारेण क्रिस्त्वब्दीयपञ्चमशतके कालिदास आसीदिति वदन्ति केचित्पाश्चात्यविमर्शकाः । "Diamtram" इति यवनानां पदेन तुल्यमिदं पदं, यवनेभ्यः खगोलपारिभाषिकपदानि गृह्णतो भारतीयात्, प्रथमात्खगोलशास्त्रभिज्ञादार्यभट्टात् कालिदासेन गृहीतमिति कैश्चिदभ्यूह्यते । अश्वघोषकाव्येषु यवनोत्पत्तिकानि तत्तुल्यपदानि विलोकयन्तो विमर्शकाः क्रिस्त्वब्दीयपञ्चमशतकात् पूर्वं कालिदासेन तत्पदप्रयोगे जातसन्देहा भवन्ति । केवलमिदं प्रकाशयति विमर्शकानां दृढतरं पक्षपातम् । जामित्रादिपदनामुत्पत्ति प्रयोगं च यदि वयं विचारयामः, सत्यमिदमिति भासेत यत् क्रीस्तोः पूर्वं पञ्चमशताब्द्यां निवसता बोधायनेन स्वगृह्यसुत्रे पदानीमान्युपयुक्तानीति । अतस्साक्ष्यमिदं न युक्तं क्रीस्तोः पूर्वस्मात् पञ्चमशतकात् परं निवसतः कालिदासस्य कालनिर्णये ।

विक्रमादित्यबिरुदविभ्राजमानैर्गुप्तवंशीयैश्चक्रवर्तिभिः कालिदासः पोषितो रक्षितश्चेति पाश्चात्यविमर्शका वक्तुं प्रयतन्ते । ते च विद्यापोषका इति शासनेभ्योऽधिगम्यते । तेषामेकस्य कुमारगुप्त इति नामधेयम् । सर्वेषां च विक्रमादित्य इति बिरुदं च, कालिदासस्य काव्ययोः कुमारसम्भवविक्रमोर्वशीययोः नामकरणे कारणतामयासीत् । रघुवंशे रघोर्दिग्विजययात्रा च (३५० A. D) समुद्रगुप्तदिग्विजययात्राया अनुकरोति, या च कालिदासकाले प्रजानां स्मृतिपथान्नापयाता । रघुणा कृतो हूणविजयश्च समुद्रगुप्तस्य हूणविजय ( ४५५ A. D) मनुकरोति ।

गुप्तराजानां सभायां कालिदास आसीदिति वक्तुं यः प्रयासो विमर्शकैराश्रीयते, सोऽयं निराधारः । गुप्तराजास्सर्वेऽपि संस्कृतभाषापुनरुज्जीवनाय प्रयत्नमकुर्वन्निति कवीनां पोषका अभूवन्निति, तेषां परिपालनाकालश्च भारतदेशे सकलजनश्लाघापात्रमभवदिति च

विमर्शकास्सर्वेऽप्यभिप्रयन्ति। भारतदेशो विद्याविषये गुप्तवंशीयान्नैव स्मरति, किन्तु स्मरति विद्वत्कविकल्पभूजं भोजं अवक्रविक्रमं विक्रमादित्यं च। यथा भोजविक्रमादित्यौ विद्याविषये भारतीयानां स्मृतिपथे चिरमवतिष्ठेते, न तथा गुप्तवंशीयाः। अधुनातनपाश्यात्यविमर्शकेभ्योऽधिकतया विद्यापोषकानधिकृत्य भारतीया नैव जानन्तीति यो व्यतिरेकाभिप्रायः स नाङ्गीकार्यः। यदि गुप्तवंशीया विद्यापोषका अभविष्यन्, भोजविक्रमादित्याविव चिरं प्रजानां स्मृतिपथे ह्यवर्त्स्यन्। कालिदासकालविषये गुप्तसम्बन्धी यो मार्गः स चाप्रतिमप्रतिभैर्विमर्शकैरुत्प्रेक्षितः। विमर्शकोत्प्रेक्षितानि साक्ष्याणीमानि गुप्तकाले कालिदासोन्यवात्सीदित्यमुं नैव द्रढयन्ति। कुमारसम्भवविक्रमोर्वशीयनाम्नोः न कश्चिद्विशेषोऽस्ति येन वयं तन्नाम्नोः, गुप्तकालसम्बन्धमाकलयामः। चिरपरिचितमिदं कुमारपदं नैवापेक्षते विवरणम्। इदं पदं शिवकुमारं सुब्रह्मण्यं बोधयति। विक्रमपदं च राज्ञः पराक्रमं बोधयति। निजपराक्रमेण पुरूरवसा सुरयुवतिरुर्वशी वशी कृतेति, विक्रमोर्वशीयनामौचित्यमस्माभिरवगन्तव्यम्। कावेरीतटे पाण्ड्यराजेनाभियाता समुद्रगुप्तस्य दिग्विजययात्रा नैवानुकुर्याद्रघोर्जैत्रयात्रायाः, यतो हीयं कावेरीतटेन सह द्वीपकल्पस्य दक्षिणदिशं सर्वतो व्याप्नोति। हूणपदप्रयोगश्च पाश्चात्यविमर्शकानां मतं नैव द्रढयति, यतो हूणा निवसन्ति क्री. पू. द्वितीयशताब्द्या आरभ्य भारतदेशस्य पश्चिमे विभागे। अत एतानि नैव निर्धारियन्ति गुप्तकालेन सह कालिदासस्य सम्बन्धम्।

क्रीस्तोः पूर्वं प्रथमशताब्द्यां कालिदासो न्यवात्सीदिति, न न्यवात्सीच्च क्रीस्तो परं प्रथमशताब्द्यां तदनन्तरं चेत्यमुं सिद्धान्तं स्थिरीकर्तुं साक्ष्यमेकं पुरतो निक्षिप्यते। बौद्धदार्शनिकः, अश्वघोषाख्यः कश्चित्कविः क्रीस्तोः परं प्रथमशताब्द्यां न्यवसत्। बुद्धचरितं सौन्दरनन्दं चेति तस्स द्वे काव्ये अनुकुरुतः कालिदासस्य कासां चन वर्णनानां केषांचन पदप्रयोगाणां च। अश्वघोषेण वर्णितं बुद्धस्य राजवीथ्यां गमनं रघुवंशे वर्णितस्य, अजस्य राजवीथ्यां गमनस्य, कुमारसम्भवे वर्णितस्य विवाहानन्तरं शिवस्य राजवीथ्यां गमनस्य

चानुकरोति । एते द्वे वर्णने अपि कवेरश्वघोषात् कालिदास एव गृहीतवानिति केचिदभिप्रयन्ति । नायमभिप्रायस्समीचीनः । प्रायशो द्वयोरपि रचयित्रोः काव्येषु तुल्यानि लक्षणानि भवेयुः । तानि न निर्धारयन्तीदं--कालिदासश्च ग्रहीता खल्वेतासामिति । निशीथे च निद्रापरवशे जने राजवीयां गन्तुमारेभे गौतमः । तदा निद्रापहृत-चेतनानां वनितानां शयनेभ्य उत्थातुमिच्छैव नोदेति । असमापित-प्रसाधनविधीनां गौतमं द्रष्टुकामानां तासां रयेण गवाक्षसमीपगमनं नैव युज्यते । निद्रा, प्रसाधनविधिः राजकुमारं द्रष्टुमिच्छा चेति त्रयं अस्या वर्णनाया अस्थानस्थतां, अन्यतो ग्रहणं चावश्यं निरूपयति । कालिदासस्य कृतिषु स्थानद्वयवर्तिनीयं वर्णना । यद्ययमिमां वर्णनां अन्यस्माद् गृण्ह्णीयात्, न निवेशयतीमं द्वयोः प्रदेशयोः । "नहि चोरो लोप्त्रं प्रकाशयति ।

अपि च कालिदासरचनासु केचन अपूर्वतया दृष्टा व्याकरण-प्रयोगाः, अश्वघोषकाव्येषु मुहुर्मुहुरुपयुज्यन्ते । तस्माद्युक्तं भवेद्यत् अश्वघोष एव कालिदासामिमां वर्णनामग्रहीदिति । अपि च कालि-दासात्प्राक्तनोऽयमश्वघोषः न स्मर्यते, नाप्यनुस्त्रियते च तदनन्तर-कालिकैः कविभिः । नैतद्वक्तुं शक्यं यत् कालिदासोऽश्वघोष स्यानुकुर्वाणस्तं चिरप्रवासिनमकार्षीदिति यतश्च वत्सभट्टेश्शासनं कालिदासशैल्यनुकरणं करोति । अत्रेदं सत्यमवधेयं यत्--आदौ दार्शनिकोऽयमश्वघोषः पश्चात् कविर्बभूव । अतश्चायं सुप्रसिद्धस्य कवेरनुकरणमकार्षीत् । कालिदासकृतिषु दृष्टपूर्वा गुणाश्च कालि दासं महाकवेः स्थाने मूर्धाभिषिक्तं कुर्वन्ति । तस्मादिदं निश्चेतुं शक्यं यत् कालिदासः क्रीस्तोः पूर्वं प्रथमशताब्द्यां न्यवसत् इति ।

कालिदासस्य कालं द्रढयितुं, कालिदासस्य कृतिषु कानिचन साक्ष्याण्युपलभ्यन्ते । दाश्वान् विश्रामहेतोः, पेलवः, त्रियम्बकः, आस इत्येवमादयः केचन विशिष्टाः प्रयोगाः अनेन कृताः भूतानद्यतनपरो-क्षार्थकलकारश्य विभज्य प्रयुक्तो दृश्यते-यथा--'तं पातयां प्रथममास

पपातःश्चात् ।" पाणिनीयव्याकरणशास्त्रानुरोधेन नेमे प्रयोगास्सा-धवः । तस्मिन् कालेऽयमासीद्यस्मिन् पाणिनेः पतञ्जलेर्वानियमाः कवीन्न निरबध्नन्, येन "निरङ्कुशाः कवय इति प्रथा च जाता । क्रीस्तोर्जननात्पूर्वं प्रथमशताब्दी चैतादृशः काल इति दरीदृश्यते ।

अभिज्ञानशाकुन्तले प्रतिपादिते, चौर्यार्थे धीवराय विहितः कठिनो दण्डः दायार्हता च क्रीस्तोः पूर्वं कालं अवगमयतः, यस्मिन् काले मनुवसिष्ठ पस्तम्बाः, धर्मशास्त्रनिर्णेतार आसन् । बृहस्पति–याज्ञवल्क्यादीनां प्रामाणिकता च कात्स्न्येन न स्वीकृता । अन्ततो मालविकाग्निमित्रस्य भरतवाक्ये प्रयुक्तमग्निमित्रपदं सूचयति कवेरग्नि-मित्रेण सह सहवसतिम् । रूपकेऽस्मिन्निरूपिता राजकीयविषया-स्सूचयन्ति यत् कविरयमग्निमित्रजीवितकालिकानां सर्वेषां विषयाणां वेदितेति । मालविकाग्निमित्रादन्यत्र नेमे विषयास्सुष्ठु न कथिताः । क्रीस्तोः पूर्वं प्रथमशताब्द्यां वर्तमानस्य अग्निमित्रस्य समकालिकेनानेन कविना भाव्यम् अथवा तस्मिन् काले कविरयमासीत्, यस्मिन् अग्निमित्रस्य विषया जनानां हृदयेषु लब्धप्रतिष्ठा आसन् । मेघ-सन्देशे कृतं विदिशावर्णनं देशाभिवृद्धिं द्योतयत् विदिशाधीशेनाग्नि-मित्रेण सह कालिदासस्य सम्बन्धं सूचयति । एतत्साक्ष्याधारेण क्रीस्तोः पूर्वं प्रथमशताब्द्यां षट्पञ्चाशत्तमे वर्षे (56 B. C.) विक्रमशकार-म्भकस्य विक्रमादित्यस्य सभायामयं न्यवात्सीदिति वक्तुं सुशकम् ।

# महाकविर्माघः

अस्तिकिल श्रीवर्मलाभिधानो निर्मलान्तःकरणः कश्चिन्महीपतिः। तस्य धर्ममर्मवित्, सुप्रभदेवनामा सत्वगुणप्रधानो रजोगुणरहितो महासेनाधिपतिर्बभूव, तथागतस्य वचनं जनइव जन पतिर्यस्यवचनं पथ्यमिव स्वीचकार। तस्य दत्तको नामोत्तमगुणसम्पन्न उत्तमः पुत्रोऽजायत। स सर्वाश्रय इति जनपरम्पराप्राप्तं नामान्तरं लेभे। तादृशो दत्तकस्य तनयो माघशिशुपालवधाख्यं नवरसभरितमपि वीररसप्रधानं स्वभावमधुरं भावबन्धुरं श्रीशब्दलाञ्छितं श्रियःपतिवर्णनाललितमष्टादशवर्णनासहितं विंशतिसर्गविलसितं महाकाव्यं प्रणिनाय।

श्रूयन्तां कविवंशवर्णनपरास्त्वेते श्लोकाः।

सर्वाधिकारी सुकृताधिकारः
श्रीवर्मलाख्यस्य बभूव राज्ञः।
असक्तदृष्टिर्विरजास्सदैव
देवोऽपरस्सुप्रभदेवनामा ॥ १ ॥

काले मितं तथ्यमुदर्कपथ्यं
तथागतस्येव जनस्सचेताः।
विनानुरोधात्स्वहितेच्छयैव
महीपतिर्यस्य वचश्चकार ॥ २ ॥

तस्याभवद्दत्तक इत्युदात्तः
क्षमी मृदुर्धर्मपरस्तनूजः।
यं वीक्ष्य वैयासमजातशत्रो-
र्वचो गुणग्राहि जनैः प्रतीये ॥ ३ ॥

सर्वेण सर्वाश्रय इत्यनिन्द्य-
मानन्दभाजा जनितं जनेन ।
यश्च द्वितीयं स्वयमद्वितीयो
मुख्यस्सतां गौणमवाप नाम ॥ ४ ॥

श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म,
लक्ष्मीपतेश्चरितकीर्तनमात्रचारु ।
तस्यात्मजस्सुकविकीर्तिदुराशयादः
काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥ ५

[माघमहाकवेर्वंशवर्णनपरं श्लोकपञ्चकमिदं शिशुपालवध-स्यान्ते दृश्यते ।]

महाकविर्माघस्सर्वेषु शास्त्रेषु पण्डितः, सकलासु कलासु कुशलः, धिषणावधीरितधिषणः, नीतिशास्त्रनिर्मलमनाः, अप्रतिम-प्रतिभः कृतसकलकाव्यपरिचयश्च । वाल्मीकिव्यासकालिदास-भारव्यादिरचनासु कृतभूरि परिश्रमोऽपि भारवेश्शैलीमयं सम्यगादृत-वान् । वैदर्भीरीत्या द्राक्षापाकेन मृदुलशय्यया च कालिदासेन कवितायां प्रवर्तितायां, पाञ्चलीरीत्या नारिकेलपाकेन कठिन शय्यया च स्वकवितां प्रावर्तयद्भारविः । शिष्योगुरुभिव माघी भारविमनुचकार सर्वात्मना । महाभारतात्कथां गृहीत्वा, इन्द्र-कीलाद्रौ तपश्चरतोऽर्जुनस्य धृतकिरातरूपस्य भगवतश्शिवस्य च घोरयुद्धानन्तरं पाशुपतास्त्रलाभरूपं किरातार्जुनीयं भारविणा विर-चितम् । महाभारतादेव कथां गृहीत्वा राजसूययागे भगवन्तं श्रीकृष्णं निन्दितवत शिशशुपालस्य संहाररूपं शिशुपालवधं माघेन विरचितम् । "श्रियः कुरूणा" मिति पद्येन भारविना स्वकाव्य उपक्रान्ते, "श्रियः पति" रिति पद्येन माघेन स्वकाव्यमुपक्रान्तम् । सर्गान्तश्लोके, भार-विणा लक्ष्मीपदेप्रयुक्ते, माघेन श्रीपदं प्रयुक्तम्, भारवेराद्यसर्गत्रयस्य पाषाणत्रयमिति नाम प्राचीनै राख्याते माघस्याद्यसर्गत्रयस्य रत्नत्रय-मिति नाम कैश्चिदभिहितम् ।

भारविमाघौ युग्मजातौ कवी इव लक्ष्येते। एतयोस्सौशब्द्याख्य एकोगुणस्सम्यगुपलक्ष्यते। "सुपां तिङां च व्युत्पत्तिस्सौशब्द्यमिति कथ्यते" इत्यालङ्कारिकैस्सौशब्द्यं लक्षितम्। किसखा, हितान्न सशृणुते, संशय्य कर्णादिषु तिष्ठते यः, उपचक्रमे, उपक्रमेत, अधितिष्ठति लोकं, इयमिष्टगुणाय रोचताम् इत्यादयो भारवेर्विशिष्टा व्याकरणप्रयोगा स्साधयन्ति सौशब्द्यम्। "द्विषन्मुरम्", "वत्स्यंन्तावामयस्स च", मोक्षपथं, अनन्यगुर्वाः "पेष्टुं भुवनद्विषाम्" "पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः। इत्यादयो विशिष्टा माघस्य व्याकरणप्रयोगास्साधयन्ति सौशब्द्यम्।

केवलं दधति कर्तृवाचिनः
प्रत्ययानिह न जातु कर्मणि।
धातवस्सृजतिसंहृशास्तयः
स्तौतिरत्र विपरीतकारकः॥ शिशु-१४-६६

अत्र सौक्ष्म्यमस्माभिरवधार्यते। तथा हि—सृजविसर्गे, हृञ्हरणे संपूर्वोऽयं, शासु अनुशिष्टौ इत्येते त्रयो धातवः, भगवति विषये केवलं कर्तृवाचिनः प्रत्ययान् दधति। कदाचिदपि कर्मणि प्रत्ययान् न दधति। अर्थात् अयं सृजति, संहरति, शास्ति, इति कर्तृप्रत्ययैः कथ्यते सृज्यते संह्रियते शिष्यते इत्यादिभिः कर्मप्रत्ययैर्न कथ्यते। भगवति ष्टुञ्धातुर्विपरीतकारकः, अर्थात् स्तूयते स्तुत्यः, इति कर्मप्रत्ययान्त एव, स्तौति स्तोता इति न कतृप्रत्ययान्तः इति।

अत्र अन्तः सजलपरूपत्व शब्दानां सौक्ष्म्यमुच्यत इति सौक्ष्म्यं नाम गुण स्सौमब्द्येन सह सङ्गच्छते।

भारविणा सर्गद्वयेन नीतिशास्त्रमीमांसायां कृतायां, माघस्सर्गेणैकेन, नीतिशास्त्रविचारणामतिनिर्मलधिषणया कृतवान्। '' दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधन'' इति वने, वनेचरमुखादाकर्णितवान् धर्मजः। स सत्वरं द्रौपदीभवनं प्रविश्य, स्वानुजसन्निधौ वृत्तान्तमिममाचचक्षे। कुपिता द्रौपदी, ''युद्धायास्माभिरवश्यं सन्नद्धव्य'' मिति वदन्ती पौरुषे गुणान् पौरुषाभावे दोषांश्च वर्णयामास। सा तदैवमवोचत्–

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्यास्स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः॥

किरा–१–३३.

(सफलक्रोधस्य विपन्निवारकस्य वश्या भवन्ति सर्वे देहिनः क्रोधशून्येन जन्तुना सुहृदा सता, आदरो न, दुर्हृदा सता दरोऽपि न। इति सारांशः।) मनः प्रियेण प्रियावचनेन समुद्दीपितक्रोधो भीमः, तस्या मतमेव पोषयन्नग्रजमेवमवादीत् — भ्रातः! विवेकिन्यपि तव मतिः, करिणी पङ्कमिव विपर्ययमेत्य नश्यति। दुरन्तोऽपि द्विषतामुदयस्सुमर्षणः। फलोन्मुखः परिक्षयोऽपि न मर्षणीयः। उत्साहः प्रभुशक्तेर्मूलम्। मनस्विन आत्मपौरुषमेवालम्बनम्। पौरुषाङ्गीकारे––

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः।
नियता लघुता निरायते
रगरीयान्न पदं नृपश्रियः॥ किरा-२-१४

(विक्रमरहितं विपदस्तिरस्कुर्वन्ति। विपन्नमुत्तरकालस्त्यजति। उत्तरकालरहितो लघुर्भवति। लघुश्च राज्यस्यानर्हः इति सारांशः।)

दिक्षुस्थितानागच्छतः, चतुरो दिग्गजानि व तोयनिधीनिव च नवानुजान् कः प्रसहेत ? अतो "युद्धाय सन्नद्धो भवे" त्यर्जुनो धर्मजं युद्धाय प्रोत्साहयामास।

धर्मजोऽपि तन्मतमुपपन्नमेवेति प्रोत्साहयन्नेव मुवाच। त्वया सम्यङ्निरूपितेऽपि कर्तव्ये, मम हृदयमवितृप्ततया निर्णयमेव धावति। सन्धिविग्रहादिकर्तव्यार्थेषु सूक्ष्मभेदा अक्लेशेन प्रत्याययितुं न शक्यन्ते।

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं
गुणलुब्धास्स्वयमेव सम्पदः॥

किरा–२-३०

(न कुर्याद्यत्कमपि सहसा। सहसाकरणमविवेकः। अविवेकश्च विपदां पदम्। कामयन्ते हि विवेकिनं पुरुषं गुणलोलुपास्सम्पदस्स्वयमेव। इति तात्पर्यम्)

सम्प्रदायशुद्धं शास्त्रश्रवणं वपुर्भूषयति। श्रुतस्य क्रोधोपशान्तिर्भूषणम्। क्रोधोपशान्तिः पराक्रमस्य भूषणं भवति। पराक्रमस्य नीतिर्भूषणम्। दैवादापतितोऽप्यनर्थस्समुन्नतेस्तुल्यः। फलसिद्धि निश्चित्य, जितक्रोधा जिगीषवः पौरुषमुपयुञ्जत्युपायतया। मार्दवतिग्मते विहाय समवृत्तिर्नृपस्सूर्य इव तेजसा लोकमाक्रामति।

क्व चिराय परिग्रहश्श्रियां
क्व च दुष्टेन्द्रियवाजिवश्यता।
शरदभ्रचलाश्चलेन्द्रियै–
रसुरक्षा हि बहुच्छलाश्श्रियः॥

किरा–२-३९

(श्रियश्चिरं न तिष्ठन्ति। इन्द्रियवाजिनश्च वश्या न भवन्ति। चला बहुच्छलाश्च श्रियश्चलेन्द्रियैर्न खलु रक्षितुं शक्याः इति भावः।)

अक्षमा च सन्तापमात्मनो जनयति। क्षमा च बहुकप्रयोजना। अतस्साम्प्रतं युद्धाद्विरमणमेव साम्प्रतमिति धर्मजः प्रोवाच। ईदृशी नीतिरीतिर्भारविणा रमणीयया रीत्या द्रौपदीभीमधर्मराजानां समावेशेन, पक्षप्रतिपक्षपरिग्रहेण च निरूपिता।

लोककण्टकं शिशुपालं जहि त्वरितमितीन्द्रेण सन्दिष्टः राजसूययागं द्रष्टुमवश्यमागन्तव्यमिति धर्मजेनाकारितश्च श्रीकृष्णः। एवं सुरकार्यसुहृत्कार्यरूपेण कार्यद्वयेनाकृष्टो व्याकुलमनाः किङ्कर्तव्यताविमूढ आसीत्। तस्य कार्यद्वयस्य विप्रतिषेधात्, आवश्यकत्वाच्च, सन्दिहानः, स्वाग्रजं बलरामं स्वपितृव्यमुद्धवं चाह्वापयत्। सभां निर्माय सन्देहबीजमाख्याय–

करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम्।
विनाप्यस्मदलं भूष्णुरिज्यायै तपसस्सुतः॥
उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयस्स च॥ इति

(अवक्रविक्रमैर्विजेतृभिश्च भ्रातृभिस्समेतो धर्मजो विनाप्यस्माभिः, यागं कर्तुं प्रभविष्यति। उत्तिष्ठमानश्शत्रुर्वा रोगो वा पथ्यकांक्षिणा नोपेक्ष्यौ। वर्धिष्यमाणो रोगश्शत्रुश्च समानाविति शिष्टा आमनन्ति।)

भवन्मतश्रवणपर्यन्घं ममतमिदमित्याख्याय किङ्कर्तव्यमिति श्रीकृष्णस्तावप्राक्षीत्। अग्रजो-भुजबलदर्पितश्च बलरामः, स्वाभिप्रायमेवमाचचक्षे। केचिन्नीतिशास्त्रपारायणेन तुष्टा भवन्ति। त इदानीं न मान्याः। मन्त्रश्च योध इवाधीरः। यदस्माभिर्मन्त्र्यते तदतिचिरेणैव

चिरेणैव कार्यरूपतां नेतव्यम् । समूलघातं शत्रवो हन्तव्याः एकोऽपि रिपुर्यावद् ध्रियते, तावत्सुखं कुतो भवति । शिशुपालश्चास्माकं कृत्रिमश्शत्रुः ।

रुक्मिणीहरणेन भवांश्चैद्यस्यापकारं कृतवान् । त्वयि नरकं हन्तुं गते सति स इमां पुरीमवरुरोध । बभ्रोर्दारांश्चापाहरत् । एवं स बहुधास्माकं विराद्धा, विराद्धश्चास्माभिस्स बहुधा । अतश्शिशुपालोऽस्माकं कृत्रिमश्शत्रुः । अचिरादेव सोऽवश्यमस्माभिरभियातव्यः । इति ।

तदाकर्ण्य बृहस्पतिशिष्य उद्धव एवमवादीत् । प्रभुः प्रज्ञोत्साहौ स्वीकुर्यात् । प्रज्ञावानपि न प्रमाद्येत् ।

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ।।

(पार्थिवो नाम कोऽपि पुरुषः । तस्य बुद्धिरेव शस्त्रम् । प्रकृतय एव अङ्गानि । मन्त्रगोपनमेव कञ्चुकम् । चारा एव ईक्षणे । दूता एव मुखम् )

यथाशास्त्रं महीपतिः क्षात्रं क्षमां चावलम्बेत । सत्कविश्शब्दार्थाविव दैवपौरुषे अवलम्बेत नरपतिः । शक्त्यपेक्षो रसासनमिव नृपतिष्षाड्गुण्यमुपयुञ्जीत । अयथाबलं प्रारम्भश्च क्षयसम्पदो निदानम् । शिशुपालश्च बलवान् । स त्वया नावमान्यः । स न केवलमेकाकी । तस्य सन्ति बहवस्सहायाः ।

मखविघ्नाय सकलमित्थमुत्थाप्य राजकम् ।
हन्त जातमजातारेः प्रथमेन त्वयारिणा ।। शिशु २-१०२

यथाप्रतिज्ञं तव पितृष्वसुः पुत्रस्य शतमागांसि त्वया मर्षणीयानि । अतः प्रथमं त्वया चारसम्प्रेषणेन कर्तव्यं च परमण्डलशोधन-

स्महता यत्नेन । तस्माद्यागार्थमिन्द्रप्रस्थयात्रैव कार्या त्वयेदानीं न युद्धयात्रा । तत्रभवति भवति, पाण्डोस्सुतेन सविशेषं पूजिते सति, शिशुपालस्तत्पक्ष्याश्च त्वयि मत्सरिणो वैरायितारः । तदा तवासुहृद्गणस्तव वीर्यवह्नौ शलभतां लभतामिति ।

एवमुभाभ्यां नीतिरीती सम्यङ् निरूपिते ।

अनयोरुभयोरपि ऋतुवर्णनारीतिरतीव मोदावहा । पश्यत भारवेर्वसन्ततुम् ।

कुसुमनगवनान्युपैतुकामा
किसलयिनीमवलम्ब्य चूतयष्टिम् ।
क्वणदलिकुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ।। किरा-१०-३१

(कुसुमप्रधानानां तरूणां वनान्यारोढुकामा वसन्तलक्ष्मी : पल्लविनी चूतयष्टिमवलम्ब्य शब्दायमानालिकुलमणिमञ्जीरं यथा तथा पद्मवनेषु पदं निदधे इति सारांशः ।) अत्र प्रक्रान्तवसन्तलक्ष्मीविशेषणसामर्थ्येन, 'काचन नायिका सुन्दरं कञ्चनोन्नतप्रदेशमारोढुकामा, काञ्चन यष्टिमवलम्ब्य, क्वणन्मणिमञ्जीरं, एकस्मिन्नुन्नतप्रदेशे पादं निचिक्षेप" इति नायिकाव्यवहारसमारोपोऽत्र गम्यते ।

माघस्य मधुरं मधुवर्णनं पश्यत ।

मधुरया मधुबोधितमाधवीं
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ।। शिशु- ६-२०

(ऋतुराजो वसन्तः माधवीं प्रबोधितवान् । माधव्याश्च मकरन्दसमृद्धिरभूत् । तथा मकरन्दसमृद्ध्या मधुकराङ्गनाया मेधा-

समेधितासीत् । मनोहरा सा मधुकराङ्गना मदजनकध्वनिं बिभ्रती निभृताक्षरं मुहुर्गानमकरोदिति तात्पर्यम् ।) एतेन वसन्ततौ विकसिताया माधवीलताया मकरन्दपानेन मत्ता मधुकरी मधुररवमकरोदिति, प्रस्तुते वर्ण्यमाने 'काचन नायिका केनचिन्नायकेन प्रबोधितया नायिकया समानीतं सुगन्धि मधु पीत्वा मत्ता मधुरं गानमकरोदित्यप्रस्तुतवृत्तान्तो व्यज्यते । अत्र मधुरानुप्रास :, समताख्यो गुणः, पदलालित्यं च लक्ष्यते । चरमपादे मध्ययमकं च दृश्यते । शिष्योऽत्र गुरोर्मतिमतिशेत इव ।

सावधानमवधारयन्तु भारवेश्शिशिरं, यश्शिशिरयति नश्चेतांसि ।

कतिपयसहकारपुष्परम्य-<br>स्तनुतुहिनोऽल्पविनिद्रसिन्दुवार : ।<br>सुरभिमुखहिमागमान्तशंसी<br>समुपययौ शिशिरस्स्मरैकबन्धु : ।। किरा-१०-३०

(कतिपयैरेव चूतकुसुमैस्सुन्दरः, नतु वसन्तवत्-समग्रचूतकुसुमो, नापि हेमन्तवच्चूतकुसुमरहितः, अल्पतुषारः न तु हेमन्तवद् बहुलतुषारः, नापि बसन्तवद्विरलतुषारः विकसितकतिपयनिगुण्डीकुसुमः, नतु वसन्तवत्समग्रनिर्गुण्डीकुसुमः, नापि हेमन्तवन्निर्गुण्डीकुसुमरहितो मनोभवमुख्यबन्धुर्वसन्तप्रारम्भं हेमन्तावसानं च शंसन् शिशिरर्तुस्समाजगाम इत्यस्य सारांशः)

शरद्वर्षयोस्सन्धिं भारविर्हृदिस्पृशा वर्त्मना वर्णितवान्-तथाहि-

समदशिखिरुतानि हंसनादैः<br>कुमुदवनानि कदम्बपुष्पवृष्ट्या ।<br>श्रियमतिशयिनीं समेत्य जग्मु-<br>र्गुणमहतां महते गुणाय योगः ।। किरा-१०-२५

(मत्तमयूरकूजितानि हंसनादैस्समेत्य, तथा कुमुदवनानि कदम्बपुष्पसम्पदा समेत्य च, अतिशयवतीं शोभामवापुः । सम्पद्यते खलु गुणाधिकानां परस्परसमागमो महोत्कर्षाय ।) अनुरूपयोस्समागमस्समालङ्कृतिः । समालङ्कृतिसमलङ्कृतेच्छेकानुप्रासवृत्त्यनुप्रासाभ्यामञ्चितः, अर्थान्तरन्यासस‌हितश्चायं श्लोकश्शरद्वर्षर्तुसन्धिं सूचयति ।

शब्दार्थचमत्कृतिभूयिष्ठं माघस्य शरद्वर्णनं कं न लोभयति ?

समय एव करोति बलाबलं
प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृत–
स्वरमयूरमयू रमणीयताम् ।। शिशु–६-४४

(समय एव शरीरिणां बलावले करोतीति कथयन्त इव शरत्समये परुषीकृतमयूरस्वरा हंसस्वरा रम्यतामवापुः । शरत्प्रावृषो हंसमयूरकूजितयो र्माधुर्यामाधुर्य विपर्ययदर्शनात्काल एव बलाबलनिदानमिति व्यक्तमभूदिति तात्पर्यम् ।) अत एवेयमभियुक्तिर्युक्तिमती--कालस्सर्वस्य कारणमिति । निदर्शना चरमपादयमकं च, चमत्कृतिं जनयतः ।

प्रोषितभर्तुकाहर्षंकरा वर्षाः कं न विनोदयन्ति ।

मुदमब्दभुवामपां मयूरा
स्सहसायन्त, नदी पपाट, लाभे ।
अलिनारमतालिनी शिलीन्ध्रे
सह सायन्तनदीपपाटलाभे ।।

(मेघप्रभवानामपां लाभे, अर्थात् मेघे वर्षति सति, सहसामयूरा आनन्दमलभन्त । नद्यश्च प्रावहन् । सायन्तनदीपपाटलाभे

शिलीन्ध्रे भ्रमरेण सह भ्रयर्यरमत । इति सारांशः ।) अत्र समुच्चयालङ्कारेण सह पादयमकरूपशब्दालङ्कारोऽपि परां शोभां जनयति । अयमपि हृदये धार्यताम्–

कुटजानि वीक्ष्य शिखिभिश्शिखरीन्द्रं
समयावनौ घनमदभ्रमराणि ।
गगनं च गीतनिनदस्य गिरोच्चै-
स्समया वनौघनमदभ्रमराणि । शिशु ६-७३

(रैवताद्रेस्समीपवर्तिनि प्रदेशे मत्तभृङ्गाणि कुटजकुसुमानि वीक्ष्य, पयःपूरनमन्मेघं गगनं च वीक्ष्य गानध्वनेस्तुल्यया गिरा, अर्थात् केकासहितैर्मयूरैरुच्चैश्शब्दितमिति सारांशः ।) पादयमकमत्रापि परां शोभां पुष्णाति ।

उभाभ्यामपि विहितं, शब्दार्थचमत्काराभ्यामञ्चित कृतश्लेषाश्लेषं सयमकं च ऋतुवर्णन कस्य नानन्दयति हृदयम् ।

एकैकस्यापि सलिलक्रीडावर्णनं सहृदयहृदयान्यावर्जयति ।

इन्द्रकीलाद्रौ तपश्चरतो जितेद्रियस्यार्जुनस्य समाधिभङ्गं कर्तुं सुरपतिना प्रेषितास्सुरयुवतयः ताः । कञ्चित्कालं प्रियैस्साकं वने विहृत्य समुच्चलत्तरङ्गां सुरतरङ्गिणीमवजगाहिरे । ललितात्सलिलक्रीडावर्णनाद्द्वित्राणि पद्यान्यत्रोदाहरामः ।

निशम्यतां हृद्यमिदं पद्यम् ।

विगाढमात्रे रमणीभिरम्भसि
प्रयत्नसंवाहितपीवरोरुभिः ।
विभिद्यमाना विससार सारसा
नुदस्य तीरेषु तरङ्गसंहतिः ॥ रा–८-३१

(प्रयत्न सञ्चारितपीवरोरुभी रमणीभिस्सलिले प्रविष्टमात्र एव. विशीर्यमाणा तरङ्गसंहतिस्तीरस्थितान् सारसानुदस्य विसलार ।)

स्नान्तीनां सुरसुन्दरीणां सौन्दर्यं नोत्पादयति कस्य विस्मयम् ?

विपत्रलेखानिरलक्तकाधरा
निरञ्जनाक्षीरपि बिभ्रतीश्श्रियम् ।
निरीक्ष्य रामा बुबुधे नभश्चरै
रलङ्कृतं तद्वपुषैव मण्डनम् ।। किरा–८–४०

स्नान्तीनां सुरसुन्दरीणां सलिलसंसर्गेण प्रत्रलेखा विगताः । अधरादलक्तकमपेतत् । अक्ष्णोरञ्जनं चापेतम् । तासां रामणीयकं वीक्ष्य, गन्धर्वा "वपुषैव मण्डनमलङ्कृतमिति, स्वभावरमणीयानामासां किमलङ्करणैरिति च तर्कयामासुः ।

सुरापगायां स्नानमाचरन्तीनां सुरसुन्दरीणां सुन्दरवदनारविन्दसन्दर्शनसञ्जातकौतुको भारविः हृद्यमिदं पद्यं व्यरीरचत् ।

तिरोहितान्तानि नितान्तमाकुलै-
रपां विगाहादलकैः प्रसारिभिः ।
ययुर्वधूनां वदनानि तुल्यताम्
द्विरेफवृन्दान्तरितै स्सरोरुहैः ।। किरा ८–४७

जलावगाहनेन देववनितानां सौन्दर्यसदनानि वदनानि, विकीर्णैः केशैश्छादितानि । तानि षट्पदपुञ्जमञ्जुलानि सरोरुहाणीव विरेजिरे ।

महाकविर्माघोऽपि भारवेस्सलिलक्रीडावर्णन सञ्जातसन्तोष इव सलिलनिधौ गोपिकानां सलीलं सलिलावगाहनं सललितं समुपवर्णितवान् ।

चलदूर्मि सलिलं सलीलमवगाहमाना युवतीरवेक्ष्य कस्याश्चन मुखमभिवीक्ष्य, किं वा मुखमिदं किं वा पद्ममिति प्रथमतस्संशय्य क्षणं, सहजैर्विलासैर्मुखमेवेदमिति कश्चिन्निरचैषीत्। श्रूयतामिदं पद्यं यदुपर्युक्तभावव्यञ्जकम्।

किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः।
संशय्य क्षणमिति निश्चिकाय कश्चित्
द्विब्बोकैर्बकसहवासिनां परोक्षैः॥

शिशु-८-२९

पद्महस्ता काचन युवति स्सलिलादुन्ममज्ज। सा श्रीरिव रेजे। यां वीक्ष दिवौकसोऽपि विस्मिता आसन्। तां वीक्ष्य श्रीकृष्णः क्षीरसागरमथनस्य व्यस्मार्षीत्। इति भावं व्यञ्जयन्माघस्य प्रहर्षं प्रकटयच्चेदं पद्यं श्रूयतां, यत्सचेतसां चेतांस्याकर्षति।

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥

शिशु-८-६४

वनविहरणश्रान्तानां कान्तानां महार्णवावगाहनं वर्णयन् परिहृताधो माघो माघ इव परं तुष्यन्निदं पद्यमरचयत्।

गाम्भीर्यं दधदपि रन्तुमङ्गनाभिः
संक्षोभं जघनविघट्टनेन नीतः।
अम्भोधिर्विकसितवारिजाननोऽसौ
मर्यादां सपदि विलङ्घयाम्बभूव॥

शिशु-८-२६

गम्भीरोऽपि महार्णवः, अङ्गनाभी रन्तुं, जघनविघट्टनेन संक्षोभं नीतः । विकसितवारिजाननो महार्णवोऽपि मर्यादामलङ्घयत् ।

अत्र, अविकारिचित्तत्वं दधदपि कश्चित्पुरुषः, अङ्गनाभी रन्तुं, जघनविघट्टनेन संक्षोभं नीतो विकसितवदनारविन्दस्सन्, औचित्यं परिहृत्य प्रवर्तत इत्यप्रस्तुतवृत्तान्तोऽपि प्रतीयते ।

एवमुभावपि सलिलक्रीडावर्णने स्वनैपुण्यं प्रदर्श्य, अप्रतिमप्रतिभाविति प्रतीतिं प्राप्नुताम् ।

भारवेर्हैमाचलसदृशस्य हिमाचलस्य वर्णनापराणि हृद्यानि पद्यानि कतिचन श्रुयन्ताम् ।

अलमेष विलोकितः प्रजानां
सहसा संहृतिं महसा विहन्तुम् ।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपश्शिरोभिः ॥ किरा-५-१७

दर्शनानुपदमेव हिमगिरिरयं, पापपरिहारं कर्तुं प्रभविष्यति, यः खलु तुषारधवलैस्स्वशिरोभिर्गगनं सहस्रधा करोति । अपिच–

वीतजन्मजरसं परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम् ।
आगमादिव तमोपहादित–
स्सम्भवन्ति गतयो भवच्छिदः ॥ किरा-५-२२

जननजरारहितं परिशुद्धं ब्रह्मणः स्थानमिच्छतां वेदादिव, अस्मान्नगाधिपादपि भवच्छिदो गतयो भवन्ति ।

अन्यच्च--

ईशार्थमम्भसि चिराय तपश्चरन्त्या
यादोविलङ्घनविलोलविलोचनायाः ।
आलम्बताग्रकरमत्र भवो भवान्याः
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥ किरा-५-२९

पिनाकपाणिं पतिमाप्तुमिच्छन्त्या मीनाक्ष्याः पार्वत्याः पाणिं स्विन्नाङ्गुलिना स्वपाणिना परमेश्वरो जग्राहेति पर्वतराजोऽयं जगदम्बिकायाः परिणयस्थानमिति विनिवेदयति भारविः ।

एवं हिमाद्रिमधिकृत्य महता यत्नेन स्वाभिप्रायमाविष्करोति महाकविर्भारविः ।

महाकविर्माघोऽपि रमणीयया रीत्या रैवतकाद्रिमुपवर्णितवान् । पश्यतेदंपद्यम् ।

बिम्बोष्ठं बहुमनुते तुरङ्गवक्त्र-
श्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।
श्लिष्यन्तं मुहुरितरोऽपि तन्निजस्त्री
मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ शिशु–४-३८

अत्रायं सारांशः—अस्ति हयवदनो मनुष्यशरीरश्च कश्चन देवयोनिविशेषः। अस्ति मनुष्यवदनो हयशरीरश्च कश्चन देवयोनिविशेषः । एतावुभावपि प्रियासहितौ गतौ रैवतकम् । हयवदनो बिम्बोष्ठं प्रियाया मुखं चुम्बन्तं किन्नरं वीक्ष्य मोदते परम् । किन्नरः-कृशमध्यां सुस्तनीं प्रियामालिङ्गन्तं हयवदनं वीक्ष्य तुष्यति परम् । यद्यस्य दुर्लभं भवति, स तद्वाञ्छति खलु लोके । हयवदनस्य प्रियामुखचुम्बनं न सम्भवति । किन्नरस्य आलिङ्गनं न सम्भवति । हयवदनश्चुम्बनं कांक्षति । किन्नरस्त्वालिङ्गनं कांक्षति ।

चन्द्रिकासुन्दरस्य रैवतकस्य वर्णनं कृतवतो माघस्य चमत्कृतिमत्कृतिमत्तां विदाङ्कुर्वन्तु सहृदयाः ।

भिन्नेषु रत्नकिरणैः किरणैरिहेन्दो-
रुच्चावचैरुपगतेषु सहस्रसंख्याम् ।
दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः ॥ शिशु ४-४६

रैवतके सन्ति भास्वन्ति रत्नानि । रत्नकिरणेषु चन्द्रकिरणाः पतिताः । रत्नकिरणैर्मिश्राश्चन्द्रकिरणास्सहस्रसंख्यां गताः । सहस्रसंख्याकान् किरणान्वीक्ष्य सूर्योऽयमिति भ्रान्त्या रात्रावपि विकसितनलिना नलिन्यो भवन्तीति सारांशः ।

"श्लेषः पुष्णाति सौभाग्यं प्रायो वक्रोक्तिषु स्थितम्" इति यदुक्तं तदन्वर्थमेवेति समर्थयतो माघस्य रैवतकवर्णनं पश्यतैकवारम् ।

एतस्मिन्नधिकपयश्श्रियं वहन्त्य-
स्संक्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
सादृश्यं दधति गिरां महासरस्यः ॥ शिशु ४-५९

दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्ते । महत्यश्च तास्सरस्यश्च महासरस्यः ताश्च रैवतकगिरौ विलसन्ति । ताश्च अधिकानामपां शोभां वहन्ति । वातोद्धूतेन वेगेन संक्षोभं नीयन्ते । रामो-नाम सारसाख्यः पुरुषपक्षी । अवियुक्तरामस्लक्ष्मणा सारस्यस्तत्र सन्ति । तादृशा महासरस्यो वाल्मीकेर्गिरां सादृश्यं भजन्ति । कथमिति चेदत्रोच्यते । वाल्मीकेर्गिरः, अधिकाः पयो यासु ताः । श्रियं सीतां वहन्त्यश्च "राघवत्वे भवत्सीता रुक्मिणी, कृष्णजन्मनीतिवचनात् जययुक्तेन हनुमता नीताः । अरहितौ = अवियुक्तौ रामलक्ष्मणौ दाशरथी यासु ताः इति सारांशः । अत्र कविना गूढश्लेष उपयुक्तः ।

उभावपि महाकवी शब्दार्थचमत्कारी सम्यक्प्रदर्श्य रैवतक-हिमाचलौ सहृदयहृदयङ्गमया सरण्या वर्णयामासतुः।

भवन्ति महाकवयस्साधारण्येन सूक्तिसहस्रद्योतितान्त-रात्मानः। ते च सूक्तिरत्नानां गुम्फनार्थं रचयन्ति गुणवन्ति काव्यानि। महाकविर्भारविरपि बहुभिः वर्णामृतैस्सूक्तिभिस्स्वकाव्यमभूषयत्। एकैकस्य सूक्तिरत्नस्य मूल्यमवगन्तुं न शक्नुमो वयम्। सहृदया एव सूक्तिरत्नानां यथार्थं मूल्यमवगन्तुमर्हन्ति। कतिचिदत्र भवतां पुरोनिक्षिपामः विदाङ्कुर्वन्तु तत्र भवन्तो भवन्त एषां यथार्थं मूल्यम्।

"हितं मनोहारि च दुर्लभं वचः" किरा १–४

प्रियं हितं च यद्वचः, तद् भवति खलु दुर्लभम्। अत्र प्रियं नाम तात्कालिकसुखजनकमपि, आयतौ दुःखजनकम्। हितं नाम तात्कालिक दुःखजनकमप्यायतौ सुखजनकम्। युक्तः प्रियहितयोरिति सूत्रेण प्रियेण हितेन च वचसा मानवो युक्तस्स्यात्। तदेव नोपपद्यत इत्युक्तं भारविभट्टेन।

अन्यच्च—"न तितिक्षासममस्ति साधनम्।"

लोके नास्ति क्षमया समं साधनमन्यत्। अत एव युक्तमुक्तम्—

क्षमावानुच्यते साधुः
न क्षमासदृशं भुवि।
मङ्गलानां क्षमा योनिः
श्रूयता वेम विश्वद॥

अपि च — सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे। किरा ४–४

जाते च, अनुरूपयोः पदार्थयोः, सुदुर्लभे—समागमे, तयो-र्निरुपमां शोभां वीक्ष्य को नाम नाभिनन्दति ?

दृश्यतामिदमपरम्—

"नहीङ्गितज्ञोऽवसरेऽवसीदति ।" किरा-४-२०

प्राप्ते च समये हृदयगतभावाभिज्ञः पुरुषो न भजति खलु तूष्णींभावम्—

इदमपि श्रुतिगोचरीक्रियताम्—

"श्रेयांसि लब्धुमसुखानि विनान्तरायैः ।" किरा-५-४९

न लभते खलु श्रेयांसि विना विघ्नैः । अपोढविघ्नो मानवश्श्रेयसा भाजनं भवति । इयं सूक्तिः, श्रेयांसि बहुविघ्नानीतिसूक्तिमुपजीवयतीव ।

माधमहाकविरपि यथावसरं स्वकाव्ये भारविरिव भास्वन्ति सुक्तिरत्नानि गुम्फितवान् सुश्लिष्टम्अपि । अपि श्रुतमिदम् ?

ग्रहीतुमार्यान्परिचर्यया मुहु—
र्महानुभावा हि नितान्तमर्थिनः । शिशु-१-१७

महात्मानः पूज्यपूजां कर्तुं सर्वदा यतन्ते हि । इयं सूक्तिः "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः इति कालिदासीयां सूक्तिं स्मारयतीव ।

अन्यदधीयताम्—

सतीव योषित्प्रकृतिस्सुनिश्चला
पुमांसमभ्येति भवान्तरेष्वपि ।। शिशु. १-७२

यथा पतिव्रता स्त्री, इतरेष्वपि जन्मसु स्वपुरुषमेवान्वेति, तथा स्वभावो जन्मान्तरेष्वपि पुरुषमभ्युपैतीति सारांशः । धर्मशास्त्रप्रणेतुर्मनोर्भावं मनसि निधाय कविना सूक्तिरियं गुम्फ़िता । अत्र प्रमाणं तु—

पतिं या नाभिचरति मनोवाक्कायसंयुता ।
सा भर्तृलोकानाप्नोति सद्भिस्साध्वीति चोप्यते ॥

श्रुतिविषयीक्रियतामिदमपरम्–

………महीयांसः प्रकृत्या मितभाषिणः । शिशु-२-१३

नन्वदिदितं, महात्मानस्स्वभावेन मितभाषिणो भवन्तीति । मितभाषित्वं नाम महतामुत्तमो गुणः खलु । तेन सत्यता संरक्ष्यते । सूक्तेरस्याश्श्रवणेन, "सत्याय मितभाषिणाम्" इति कालिदाससूक्तिस्स्मृतिपथमुपयाति ।

नेदमुपगतं किं कर्णपथम् ?

"बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः" शिशु-२-३८

रूढमूलस्य विरोधद्रुमस्य स्त्रियः प्रधानं कारणं ननु ।

निधेहीदं निजमनसि ।

"समये हि सर्वमुपकारिकृतम् ।" शिशु-९-४३

यथाकालं कृतं सर्वमपि सप्रयोजनं भवति ननु । कालमतिक्रम्य करणे अमृतमपि विषं भवति । अत एवोक्तं "आलस्यादमृतं विषम्" इति ।

तदुक्तं कविकुलगुरुणा कालिदासेन—

"काले खलु समारब्धाः फलं पुष्यन्ति नीतयः ।"

एवं सर्वेष्वंशेषु महाकविं भारविं माघमहाकविरनुकरोतीत्यत्र न कोऽपि सन्देहः ।

**माघस्सर्वशास्त्रविशारदः**

अनेन प्रणीतात् शिशुपालवधादयं सर्वेषु शास्त्रेषु कृतभूरिपरिश्रम इति विज्ञायते । अस्य सर्वशास्त्रपाण्डित्यं कतिभिश्चिदुदाहरणैः स्फुटीकरिष्यामः । अयमधीती-व्याकरणे । अस्य पाण्डित्यं पदे पदे

स्फुटीभवति । 'मुरं द्विषन्' इत्यत्र 'द्विषोऽमित्रे' इति सूत्रेण शतृप्रत्यये 'न लोकाव्ययनिष्ठाखलर्थतृना' मिति सूत्रे 'द्विषश्शतुर्वा' इति सूत्रं वैकल्पिकं षष्ठीप्रतिषेधं करोति ।

पृथाया अपत्यं पुमानिति विग्रहे "स्त्रीभ्यो ढक्" इति सूत्रेण ढकि पार्थेय इति रूपेण भवितव्ये, "तस्येद' मित्यणा पार्थ इति रूपं साधयति ।

"वर्त्स्यन्तावामयस्य च" इत्यत्र वर्धतेरात्मनेपदित्वात् शानच्-प्रत्यये वर्धिष्यमाणाविति रूपेण भवितव्यं न तु वर्त्स्यन्ताविति शत्रन्तरूपेण । तदा कथमिदमुक्तमिति चेत्-महावैयाकरणो माघो "वृद्भ्यस्स्यसनोः", "न वृद्भ्यश्चतुर्भ्यः" इतिपाणिनिमुनेस्सूत्र-द्वयं स्मृत्वा वृधुधातोः वैकल्पिकं परस्मैपदित्वं इण्णिषेधं च कुर्वन् वर्त्स्य-न्ताविति शत्रन्तं प्रयुङ्क्ते ।

'वपुषा चतुर्भुजः' 'मुखेन त्रिलोचन' इत्युभयत्रापि तृतीयां प्रयुञ्जानः "येनाङ्गविकार इति सूत्रं स्मारयन्, हानिवदाधिक्यम-प्यङ्गानां विकार इति वामनसूत्रेण, अङ्गाधिक्यस्यापि, अङ्गविकार-त्वमेव साधयति ।

लङ्कां निकषा हनिष्यतीत्यत्र 'अभितः परितस्समया निकषा हा प्रतियोगेऽपि' इतिसूत्रेण निकषाशब्दयोगेन लङ्काशब्दस्य द्वितीया, "हनिष्यतीत्यत्र' लृडन्तस्य 'अभिज्ञावचने लृट्' इति सूत्रेण भूते प्रयो-गश्च वैयाकरणतामस्य सूचयतः ।

'उत्तिष्ठमानस्तु पर' इत्यत्र ष्ठाधातोः परस्मैपदित्वात् शतृ-प्रत्ययान्ते प्रयोक्तव्येऽपि, 'उदोऽनूर्ध्वकर्मणि' इति सूत्रेण आत्मनेपदित्वं जानान, आत्मनः पाणिनीये पटुत्वं प्रकाशयति ।

'व्यचीकसत्, 'अपूपुजत् अजीगणत्' इत्यादि विशिष्टानां लुङन्तानां प्रयोगोऽपि तस्य शास्त्रज्ञतां सूचयति । 'लघुर्बहुतृणं नर'

इत्यत्र बहुतृणशब्दोऽस्य निपुणतां प्रकटयति । ईषदसमाप्तं तृणं बहुतृणं, तृणकल्पमित्यर्थः । 'विभाषा सुपो बहुच् पुरस्तात्तु' इति सूत्रेण बहुच्प्रत्ययः । अयं प्रकृतेः पूर्वं च भवति । इमं विहाय कश्चिदपि प्रत्ययः पुरस्तान्न भवति, 'प्रत्ययः परश्च–'इति दर्शनात् । 'स्यादीष दसमाप्तौ तु बहुच्प्रकृतिलिङ्गके' इतिवचनात् प्रकृतिलिङ्गता ।

"समूलघातमघ्नन्त" इति 'जीवग्राहं ग्राहयामासु' रिति प्रयोगौ विना व्याकरणज्ञानं कर्तु न शक्येते । 'समूलाकृतजीवेषु हन्-कृञ्ग्रहः' इतिसूत्रेण णमुल्प्रत्यये 'कषादिषु यथाविध्यनुप्रयोग' इति सूत्रेण हन्तेर्ग्रहेश्चानुप्रयोगे, उपर्युक्तौ द्वावपि प्रयोगौ सिध्यतः ।

"निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥ शिशु-१९-७५

इत्ययं श्लोकः, कवेः पाणिनीये पाटवं प्रकटयति । रणरङ्गे सुहृदस्स्वामिनिः पितृव्या भ्रातरो मातुलाश्च वीरशय्यां गमिताः । तादृशं रणरङ्गं धीराः पाणिनीयं व्याकरणमिवापश्यन्नित्युक्तं माघेन । एवंवादिनो माघस्य पाणिनीये प्रचुरः प्रचारोऽस्तीति विज्ञायते । 'सुहृद् दुर्हृदौ मित्रामित्रयो' रिति सूत्रे हृदयशब्दस्य हृद्भावो निपातितः । शोभनं हृदयं यस्य सः, सुहृत् । स्वमस्यास्तीति स्वामी, ईश्वरः । 'स्वामिन्नैश्वर्ये' इति सूत्रेण मत्वर्थीयनिपातः पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलः । पितुर्भ्राता पितृव्यस्स्यान्मातुर्भ्राता तु मातुल, इत्यमरः । 'पितृव्यमातुलमातामहपितामहा' इति सूत्रेण व्यड्डुलजन्तनिपातौ । बिभर्तीति भ्राता 'नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ" इति सूत्रेण औणादिको निपातः ।

"उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं ययुः ।
पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः ॥

शिशु-१९-१०३

स्फुटीभवति । 'मुरं द्विषन्' इत्यत्र 'द्विषोऽमित्रे' इति सूत्रेण शतृप्रत्यये 'न लोकाव्ययनिष्ठाखलर्थतृना' मिति सूत्रे 'द्विषश्शतुर्वा' इति सूत्रं वैकल्पिकं षष्ठीप्रतिषेधं करोति ।

पृथाया अपत्यं पुमानिति विग्रहे "स्त्रीभ्यो ढक्" इति सूत्रेण ढकि पार्थेय इति रूपेण भवितव्ये, "तस्येद' मित्यणा पार्थ इति रूपं साधयति ।

"वत्स्यन्तावामयस्य च" इत्यत्र वर्धतेरात्मनेपदित्वात् शानच्-प्रत्यये वर्धिष्यमाणाविति रूपेण भवितव्यं न तु वत्स्यन्ताविति शत्रन्तरूपेण । तदा कथमिदमुक्तमिति चेत्-महावैयाकरणो माघो "वृद्भ्यस्स्यसनोः", "न वृद्भ्यश्चतुर्भ्यः" इतिपाणिनिमुनेस्सूत्र-द्वयं स्मृत्वा वृधुधातोः वैकल्पिकं परस्मैपदित्वं इण्णिषेधं च कुर्वन् वत्स्य-न्ताविति शत्रन्तं प्रयुङ्क्ते ।

'वपुषा चतुर्भुजः' 'मुखेन त्रिलोचन' इत्युभयत्रापि तृतीयां प्रयुञ्जानः "येनाङ्गविकार इति सूत्रं स्मारयन्, हानिवदाधिक्यम-प्यङ्गानां विकार इति वामनसूत्रेण, अङ्गाधिक्यस्यापि, अङ्गविकार-त्वमेव साधयति ।

लङ्कां निकषा हनिष्यतीत्यत्र 'अभितः परितस्समया निकषा हा प्रतियोगेऽपि' इतिसूत्रेण निकषाशब्दयोगेन लङ्काशब्दस्य द्वितीया, "हनिष्यतीत्यत्र' लृडन्तस्य 'अभिज्ञावचने लृट्' इति सूत्रेण भूते प्रयो-गश्च वैयाकरणतामस्य सूचयतः ।

'उत्तिष्ठमानस्तु पर' इत्यत्र ष्ठाधातोः परस्मैपदित्वात् शतृ-प्रत्ययान्ते प्रयोक्तव्येऽपि, 'उदोऽनूर्ध्वकर्मणि' इति सूत्रेण आत्मनेपदित्वं जानान, आत्मनः पाणिनीये पटुत्वं प्रकाशयति ।

'व्यचीकसत्, 'अपूपुजत् अजीगणत्' इत्यादि विशिष्टानां लुङन्तानां प्रयोगोऽपि तस्य शास्त्रज्ञतां सूचयति । 'लघुर्बहुतृणं नर'

इत्यत्र बहुतृणशब्दोऽस्य निपुणतां प्रकटयति । ईषदसमाप्तं तृणं बहुतृणं, तृणकल्पमित्यर्थः । 'विभाषा सुपो बहुच् पुरस्तात्तु' इति सूत्रेण बहुच्प्रत्ययः । अयं प्रकृतेः पूर्वं च भवति । इमं विहाय कश्चिदपि प्रत्ययः पुरस्तान्न भवति, 'प्रत्ययः परश्च–'इति दर्शनात् । 'स्यादीषदसमाप्तौ तु बहुच्प्रकृतिलिङ्गके' इतिवचनात् प्रकृतिलिङ्गता ।

"समूलघातमघ्नन्त" इति 'जीवग्राहं ग्राहयामासु' रिति प्रयोगौ विना व्याकरणज्ञानं कर्तुं न शक्येते । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इतिसूत्रेण णमुल्प्रत्यये 'कषादिषु यथाविध्यनुप्रयोग' इति सूत्रेण हन्तेर्ग्रहेश्चानुप्रयोगे, उपर्युक्तौ द्वावपि प्रयोगौ सिध्यतः ।

"निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥ शिशु-१९-७५

इत्ययं श्लोकः, कवेः पाणिनीये पाटवं प्रकटयति । रणरङ्गे सुहृदस्स्वामिनिः पितृव्या भ्रातरो मातुलाश्च वीरशय्यां गमिताः । तादृशं रणरङ्गं धीराः पाणिनीयं व्याकरणमिवापश्यन्नित्युक्तं माघेन । एवंवादिनो माघस्य पाणिनीये प्रचुरः प्रचारोऽस्तीति विज्ञायते । 'सुहृद् दुर्हृदौ मित्रामित्रयो' रिति सूत्रे हृदयशब्दस्य हृद्भावो निपातितः । शोभनं हृदयं यस्य सः, सुहृत् । स्वमस्यास्तीति स्वामी, ईश्वरः । 'स्वामिन्नैश्वर्ये' इति सूत्रेण मत्वर्थीयनिपातः पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलः । पितुर्भ्राता पितृव्यस्स्यान्मातुर्भ्राता तु मातुल, इत्यमरः । 'पितृव्यमातुलमातामहपितामहा' इति सूत्रेण व्यड्डुलजन्तनिपातौ । बिभर्तीति भ्राता 'नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ" इति सूत्रेण औणादिको निपातः ।

"उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं ययुः ।
पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः ॥

शिशु-१९-१०३

दृप्तान् शत्रून् हिंसतस्तस्य हरेश्शरः पानार्थे धातौ सति—पा पाने इति भौवादिके धातौ सति, रुधिरं, रक्षार्थे धातौ सति=पा रक्षणे इति, आदादिके धातौ सति, भुवनं चेति द्वितयं ययुः ।

हरेर्बाणाश्शत्रूणां शोणितमपिबन् । भुवनं चारक्षन्निति तात्पर्यम् । "पापाने" इति भौवादिकः, "पा रक्षणे" इत्यादादिकश्चेति द्वौ धातू वर्तेते इति धातुपाठस्थो विशेषोऽनेन कविना निरूप्यते ।

पद्यमिदं कवेश्शब्दविद्यायां प्रवेशं द्योतयति ।

"अनुत्सूत्रपदन्यासा सद्वृत्तिस्सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥"

शिशु-१९-११२

अत्र पूर्णोपमा । उत्सूत्रः उच्छास्त्री नीतिशास्त्रविरुद्धः स न भवतीत्यनुत्सूत्रः; पदन्यासः = एकपादप्रक्षेपः, यस्यां सा- अनुत्सूत्रपदन्यासा = नीतिशास्त्रपूर्वकसर्वव्यवहारा, सती, यथार्थकल्पनया शोभना, वृत्तिः=भृत्यामात्यादीनामाजीविका यस्यां सा सद्वृत्तिः सन्ति निबन्धनानि अनुजीव्यादीनां क्रियावसानेषु दत्तानि गोहिरण्यादिशाश्वतपारितोषिकदानानि यस्यां सा, राजनीतिः, अपस्पशा चेत् = चाररहिता चेन्नो भाति न प्रकाशते । अनुत्सूत्रपदन्यासा = अनुत्सृष्टसूत्राक्षरः इष्टच्युपसंख्याननैरपेक्ष्येण सूत्राक्षरैरेव सर्वार्थप्रतिपादको न्यासो वृत्तिव्याख्यानग्रन्थविशेषो यस्यां सा तथोक्ता । सती, वृत्तिः वामनजयादित्याभ्यां विरचितः ग्रन्थविशेषः यस्यां सा सद्वृत्तिः, सत् समीचीनं निबन्धनं भाष्यग्रन्थो यस्यां सा, सन्निबन्धना, शब्दविद्या = व्याकरणशास्त्रम—अपस्पशा चेत् = अविद्यमानः पस्पशः शास्त्रारम्भसमर्थकः उपोद्घातसन्दर्भ ग्रन्थः यस्यास्सा अपस्पशा चेत् यथा नो भाति तथा राजनीतिरपस्पशा चेत् चाररहिता चेन्नो भाति । पस्पशाह्निकरहिता शब्दविद्येव चाररहिता राजनीति

र्नो भातीति भावः । न्यासो, वृत्तिः महाभाष्यं चेति, विशेषेण महाभाष्यस्य प्रथमाह्निकरूपं पस्पशाह्निकं चानेन ज्ञातानीति व्यज्यते ।

इदमेकमुदाहरणमस्य व्याकरणशास्त्रे पाण्डित्यं प्रकटयितुं पर्याप्तं भविष्यति ।

पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ शिशु १-५१

बलवान् रावण इन्द्रेणविगृह्य पुरीममरावतीमनेकवारमवरुरोध । नन्दनवनं पौनःपुन्येन चिच्छेद । श्रेष्ठवस्तूनि पौनःपुन्येन मुमोष । अमराङ्गनाः पुनः पुनरपजहार । एवं रावणः प्रत्यहं स्वर्गस्य महोपद्रवं चक्रे" इति सारांशः ।

पुनः पुनश्चस्कन्द, पुनः पुनर्लुलाव, पुनः पुन र्मुमोष, पुनः पुनर्जहारेत्यर्थेषु प्रयुक्तानि अवस्कन्द, लुनीहि, मुषाण हर, इति लोडन्तपदानि, पाणिनीयव्याकरणपटिष्ठतामस्य प्रकटयन्ति । "क्रियासमभिहारे लोट्, लोटा हिस्वौ वा च तध्वमोः" इत्यस्यानुवृत्तौ समुच्चयेऽन्यतरस्यामिति सूत्रेण विकल्पेन कालसामान्ये लोट् । तस्य यथोपग्रहं सर्वतिङादेशः, हिस्वौ च । प्रकरणादिनात्वर्थविशेषावसानम् । "अतो हेः" इति—सूत्रेण यथा योग्यं हिलुक् । पौनः पुन्यंभृशार्थो वा क्रियासमभिहारः । अवस्कन्दनादिक्रियाविशेषाणां समुच्चयः क्रियासमभिहारः । तत्सामान्यस्य करोतेः समुच्चये सामान्यवचनस्य इत्यनुप्रयोग 'श्चक्रे' इति अत्र तिङ्वैचित्र्यात्, सोशब्दाख्यो गुणः ।

अयं श्लोकोऽपि वैयाकरणतामस्य द्योतयति ।

**परितः प्रमिताक्षरापि सर्वं**
**विषयं प्राप्तवती गता प्रतिष्ठाम् ।**

न खलु प्रतिहन्यते कुतश्चित्
परिभाषेव गरीयसी यदाज्ञा ।

मितभाषिणो यस्य राज्ञ आज्ञा सर्वं विषयं राष्ट्रकार्यं व्याप्तवत्यपि प्रामाण्यं गता अल्पाक्षरापि सूत्रदेशं गता, गरीयसी भूयिष्ठार्था परिभाषेव अनियमनिवारको न्यायविशेष इव कुतश्चित् कुत्रापि न बाध्यते इति भावः ।

"परिभाषा हि एकदेशे स्थित्वा सर्वं शास्त्रमभिज्वलयतीति" भाष्यकारः । "इको गुणवृद्धी" इत्यादिका परिभाषा, "सिचिवृद्धिः परस्मैपदेषु" इति विषयं प्राप्य स्थितिं गता सती न कुत्रापि प्रतिहन्यते ।

वादशस्त्रे तर्कशास्त्रे कृतपरिश्रमोऽयमितिवक्तुं वक्ष्यमाणमुदाहरणं किं न पर्याप्तम् ?

अन्यदुच्छृङ्खलं सत्व मन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?

अनर्गलस्य भुजबलस्य, शास्त्रादवगतस्य नयस्य च नास्ति तेजस्तिमिरयोरिव एकाधिकरणवृत्तित्वमिति बलरामो मन्यते । "अत्र नीलं तमश्चलती त्यबाधितप्रतीतिबलात् नीलरूपाधारतया चलनक्रियाधारतया च तमसो (तिमिरस्य) गुणक्रियाश्रयत्वात् तमसो द्रव्यत्वं तावसिद्धम् । तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावः, रूपसत्त्वात् । अत एव न वायौ स्पर्शाभावात् सदागतिमत्त्वाभावाच्च । नापि तेजसि, भास्वररूपाभावादुद्भूतस्पर्शाभावाच्च । नापि जले, शीतस्पर्शाभावान्नीलरूपवत्त्वाच्च । नापि पृथिव्यां, गन्धाभावात् स्पर्शरहितत्वाच्च । तस्मात्तमो दशमं द्रव्यमिति चेन्न ।

तमसस्तेजोऽभावरूपत्वात् । तमो न रूपि द्रव्यम्, आलोकासहकृतचक्षुर्ग्राह्यत्वाभावात् । आलोकाभाववत् । रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात् । तस्मात् प्रौढप्रकाशक-तेजस्सामान्या-

भावस्तमः। तत्र नीलं तमश्चलतीति प्रत्ययो भ्रम इति नैयायिकै-रभिहितस्तमोवादस्तत्रोपक्षिप्त इति कोविदा न न विदन्ति।

उदाहरिष्यमाणे श्लोकेऽपि नैयायिकतानिरूपकं सूचन-मस्ति।

अनुसन्ततिपातिनः पटुत्वं
दधत श्शुद्धिभृतो गृहीतपक्षाः।
वदनादिव वादि ोऽथ शब्दाः
क्षितिभर्तु र्धनुषश्शराः प्रसस्रुः॥ शिशु-२०-१०

वादिनो मुखादविच्छेदेन आगच्छन्तः, वाचकत्वशक्तिं दधतः, दोषरहिताः, निश्चितसाध्यवन्तः प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनाख्याश्शब्दा यथा प्रसरन्ति तथा चैद्यस्य धनुषस्सकाशात्, अविच्छेदवर्तिनः, लक्ष्यभेदपाटवं वहन्तः, निर्विषास्स्वीकृतकङ्कादिपत्रा-श्शराः प्रसस्रुरिति तात्पर्यम्। अनेनोपमालङ्कारेण, अथवा प्रकृता-प्रकृतश्लेषेण न्यायशास्त्रपाण्डित्यमत्रानुमीयते।

श्लोकोऽयमपि नैयायिकतासूचको हृदयरोचकश्च।

इषुवर्षमनेकमेकवीर-
स्तदरिप्रच्युतमच्युतः पृषत्कैः।
अथ वादिकृतं प्रमाणमन्यैः
प्रतिवादीव निराकरोत्प्रमाणैः॥ शिशु-२०-१८

महाशूरो हरिरपि, शत्रुगलितमिषुवर्षं वादिना कृतमनुमान-मितरैरनुमानप्रमाणैः प्रतिवादीव निराकरोदिति भावः। अनया पूर्णोपमया, नैयायिकाभिमतेषु प्रत्यक्षानुमानोपमानशब्दाख्येषु चतुर्षु प्रमाणेष्वन्यतमस्यानुमानप्रमाणस्य तार्किकैरेव वेद्यत्वात् प्रमाणे माघः कृतपरिश्रम इति ज्ञायते।

न्यायशास्त्रगन्धोऽत्र दृश्यते।

अप्यनारभमाणस्य विभोरुत्पादिताः परैः।
व्रजन्ति गुणतामर्थाश्शब्दा इव विहायसः॥ शिशु-२-९१

शक्तो हि राजा स्वयमुदासीन एव, आकाशवत् स्वमहिम्नैव कार्यदेशं व्याप्नुवन् शब्दानिव सर्वार्थानपि स्वकीयतां नयतीत्यर्थः। अत्र "सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं" "शब्दगुणकमाकाशं" इति च तर्कशास्त्रप्रसिद्धार्थस्योपनिबन्धनादधीतन्यायोऽयमिति कथनं न्याय्यमिव मे प्रतिभाति। नृत्तगीतवाद्यानां मेलनं सङ्गीतमित्युच्यते। तस्मिन् सङ्गीतशास्त्रे कृषिरविरलोऽस्य ननु दृश्यते।

नाकलोकान्नारदः कृष्णं द्रष्टुमागच्छन् वायोराघट्टनेन ध्वनन्तीं महतीं नाम निजवीणां पश्यति स्मेति "रणद्भिरिति श्लोके माघेनोक्तम्। स चायं श्लोकः:-

रणद्भिराघट्टनया नभस्वतः
पृथग्विभिन्नश्रुतिमण्डलैस्स्वरैः।
स्फुटीभवद्ग्रामविशेषमूर्च्छना-
मवेक्षमाणं महतीं मुहुर्मुहुः॥ शिशु १-१०

अत्र स्वर-श्रुतिग्रामविशेषमूर्च्छनादिसङ्गीतशास्त्रप्रसिद्ध-पारिभाषिकपदानां दर्शनादस्य सङ्गीतशास्त्रप्रावीण्यमनुमीयते सहृदयैः।

अनवद्यवाद्यलयगामि कोमलं
नवगीतमप्यनवगीततां दधत्।
स्फुटसात्विकाङ्गिकमनृत्यदुज्ज्वलं
सविलासलासिकविलासिनीजनः॥ शिशु १३-६६

इति श्लोकेन नृत्तगीतवाद्यत्रयरूपे सङ्गीते, सात्विकाङ्गिकाभिनयप्रदर्शनपुरस्सरं मधुरनृत्यस्य लास्यस्य वर्णनेन भरतनाट्येऽस्य महती प्रीतिरस्तीति प्रतीमः।

वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता॥ शिशु २-७२

सप्तभिरेव स्वरैर्ग्रथितस्य-गेयस्येव पञ्चाशता मातृकाक्षरै र्गुम्फितस्य वाङ्मयस्य विचित्रता नन्वपरिमिता इति वदन्माघस्सङ्गीत-शास्त्रे स्वस्य परिचयं सूचयति सहृदयान् ।

अर्थालंकाराणां शब्दालङ्काराणां च तत्र तत्र योजनेन माधुर्यौज:प्रसादाख्यानां गुणानां रसानुगुणं विनिवेशनेन चालङ्कारशास्त्रीयं पाण्डित्यमवगम्यते । "शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षत" इत्युक्तत्वात्, "अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति काव्यलक्षण-रीतिस्सूचिता कविना ।"

"पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः" इति कथनेन पूर्वरङ्गस्य यान्यङ्गान्यलङ्कारशास्त्रे निरूपितानि तानि माघेन विदितान्यभ्यूहितुं शक्यते ।

विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद् बलम् ।

शिशु-१९-४१

अत्र सर्वतोभद्र-चक्रबन्ध-गोमत्रिकादिबन्धैस्सहितं चेदिराजस्य बलं ( सैन्यं ) सर्वतोभद्रादिबन्धकवितायां रचितैश्श्लोकैस्सहितं महाकाव्यमिव विषममभवदिति कथनेन, अलङ्कारशास्त्रप्रसिद्धस्य बन्धकवित्वस्य वेदिता माघ इति तल्लक्षणग्रन्थानामध्येतेति च विशदीभवति ।

"श्लेषः प्रसादस्समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदात्तत्वमोजः कान्तिसमाधयः ।।" इति

दश शब्दगुणान् दशैवार्थगुणांश्चामनन्ति केचिदालङ्कारिकाः । 'माधुर्यौज:प्रसादाख्यास्त्रय एव गुणा' इति मम्मट भट्टादयः । "नैकमोजः प्रसादो वा रसभावविदः कवेः" इति श्लोकार्धं कथयता

वीररौद्रबीभत्सव्यञ्जिकासु रचनासु, ओजोगुणः प्रयोक्तव्य इति, शृङ्गाराद्भुतकरुणव्यञ्जिकासु रचनासु प्रसादगुणः प्रयोक्तव्य इति, स्वाभिप्रायमाविष्कुर्वता च कविना, एतच्छास्त्रीयज्ञानमभिव्यञ्जितम् ।

कविरयमालङ्कारिकेष्वग्रगण्य इति व्याख्यातृशिरोमणेर्मल्लिनाथस्याभिप्रायः। अत एव मल्लिनाथः सर्वङ्कषाख्यायां शिशुपालवधव्याख्यायां—

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्षन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम् ॥

एवं प्रतिजानानः, शब्दार्थवैचित्र्यं गुणालङ्कारविनिवेशननैपुण्यं नानाविधध्वनिनिर्भरत्वं रसभावबन्धुरतां च काव्येऽस्मिन् प्रकाशयति ।

अतो वयं ब्रूमो यत्—आलङ्कारिकमूर्धन्योऽयमिति वक्तुं शक्यत इति ।

राजसूययागविधानक्रमं वर्णयतानेन मीमांसकत्वं 'स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चती'ति वदता वैद्यशास्त्रपाटवं, श्रीकृष्णस्तवं कृतवता वेदान्तशास्त्रनैपुण्यं बलरामोद्धवयोरुभयविधनीत्योरुपवर्णनेन नीतिशास्त्रकुशलत्वं चाभिव्यज्यन्ते ।

एवं सुनिपुणं विचार्यमाणे माघस्सर्वेषु शास्त्रेषु कृतपरिश्रम इति विदितं भवति ।

### माघे सन्ति त्रयो गुणाः

"माघे सन्ति त्रयो गुणा" इति काचित्सूक्तिस्समुल्लसति सहृदयानां समाजे । तस्यास्सामञ्जस्यं शिशुपालवधे कियदिवास्तीति विचारयामः ।

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ।।

इति समग्रोऽयं श्लोकः । अस्यार्थमीमांसात्र क्रियते ।

स्वकाव्येषु उपमालङ्कारविनिवेशने प्रभुरभूत् कविकुलगुरुः कालिदासः। विद्वत्कवेर्भारवेःकाव्ये किरातार्जुनीये अर्थगौरवमुपलब्धम् । हृद्यगद्यरचयितुराचार्यदण्डिनः काव्ये दशकुमारचरिते पदलालित्यमवलोकितम् । उपरिष्टादुदितास्त्रयो गुणा अपि माघमहाकवेः काव्ये शिशुपालवधे लक्ष्यन्त इत्युपर्युक्तसूक्तेस्सारांशः ।

वस्तुतो विचार्यमाणे, कालिदाससदृश उपमाविनिवेशननिपुणो न भूतो न भविष्यति । वसन्तो यथा ऋतुराजः, शृङ्गारो यथा रसराजः, हिमगिरिर्यथा नगराजस्तथोपमालङ्कारोप्यलङ्काररराजः स च परेषामर्थावबोधनायातीव समर्थः । अस्य यावन्तो भेदास्सन्ति तावन्तस्तत्र समुदाहृताः । इतरेषामलङ्काराणां विनिवेशने निपुणोऽपि, उपमायाः प्राधान्यं दिशति । तस्य श्रव्यकाव्यत्रये प्रथमं काव्यं रघुवंशः तस्यारम्भे—"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्यालङ्कारिकवचनात् स्वेष्टदेवतयोः पार्वतीपरमेश्वरयोर्वन्दनमाचरन् सुश्लोकश्श्लोकमिमं लिखति ।

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।। रघु १–१

अत्र जगतः पितरौ पार्वतीपरमेश्वरौ शब्दार्थाभ्यामुपमिनोति । इदं चोपमानं निरुपमानमिति नाविदितं सुधियाम् । परमेश्वरोऽर्थस्वरूपः पार्वती च शब्दस्वरूपिणी तयोर्वन्दनेन शब्दार्थप्रतिपत्तिर्जायते शब्दार्थौ द्वावप्यवियुक्तौ एवमेव शिवावप्यवियुक्तौ विष्णुवक्षोविहारिण्यपि लक्ष्मीर्विष्णुना नैवं भजति तादात्म्यम् । औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति वागर्थयोर्नित्यसम्बन्धित्वं प्रसिद्धम् । इदं सर्वं मनसिकृत्येदमुपमानं दत्तम् ।

निरतिशयरूपलावण्यां समासादितयौवनां च पार्वतीं, गङ्गां हंसमाला इव महौषधिं रात्राावात्मभास इव प्राक्तनजन्मविद्याः प्रपेदिरे इत्युक्तम्। समासन्ने च समुचिते समये प्रचोदनं विनैव, प्रकृत्यैव हंसमाला गङ्गां यान्ति, तृणज्योतिर्लतां भासश्च प्राप्नुवन्ति तथा गुरूपदेशं विनैव सुलभतया विद्याः प्रापुरिति भावः। अत्र उपमानोपमेयभावस्य प्रदर्शिता चरमा सीमा। एवमुपमाविनिवेशने निपुणः कालिदासः।

भारविविरचिताश्श्लोकास्सर्वेऽपि अर्थगौरवं भजन्ति।

विषमोऽपि विगाह्यते नयः
कृततीर्थः पयसामिवाशयः।
स तु तत्र विशेषदुर्लभ-
स्सदुपन्यस्यति कृत्यवर्त्म यः॥

श्लोकेऽस्मिन्कृततीर्थे पयसि यथा बहवः प्रवेष्टारस्सन्ति, तीर्थंकरस्तु विरलः, तथा राजनीतेर्वक्तरि सति, बहवश्श्रोतारस्सन्ति वक्ता परं दुर्लभ इति गुरुरर्थो निहितः।

"परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम्।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः॥"

अल्पीयसि भेषजेऽपि यथा बहुर्गुणो दृश्यते, तथा अल्पेऽपि द्रौपदीवचने महान् गुणोस्तीत्यर्थबाहुल्यं निक्षिप्तम्।

धर्मराजेनोदीरिते "सहसा विदधीत" इति श्लोके आलोचनया विना यत्किञ्चित्कार्यस्यापि करणमविवेकः अविवेकश्चापदां प्रधानं पदम्। विमृश्यकारिणं पुरुषं तु, सम्पदस्स्वयमेव वृणते नन्विति लोकोत्तरोऽर्थः परिदृश्यते।

ललितपदगुम्फने दण्डी सर्वेभ्योऽभ्युन्नतं स्थानमाप्नोतीति विमर्शकानामभिप्रायः। तथा हि, "कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः" इति। अत्र ललितपदगुम्फनरूपं पदलालित्यं प्रतीयते।

कालिदासभारविदण्डिषु दृष्टा इमे त्रयो गुणा अपि रचनाचतुरे माघे सम्यगुपलक्ष्यन्ते। नारदं वर्णयन् माघः,—तं शम्भुना, हिमवता, बलभद्रेण, मेघेन, सुरगजेन चोपमिनोति। तेन सकलसुरपूज्यत्वं सर्वोन्नतत्वं समधिकगाम्भीर्यं दयार्द्रान्तःकारणत्वं सर्वश्रेष्ठत्वं चेति धर्मा नारदे व्यज्यन्ते। तानि सर्वाण्युपमानानि प्रसिद्धानि समुचितानि समीचीनानि समयोचितानि च।

वक्ष्यमाणमुदाहरणं माघस्याप्रतिमां प्रतिभां द्योतयति—

प्रजा इवाङ्गादरविन्दनाभे—
श्शम्भोर्जटाजूटतटादिवापः।
मुखादिवाथ श्रुतयो विधातुः
पुरान्निरीयुर्मुरजिद्ध्वजिन्यः॥ शिशु· ३-६५

विष्णोरङ्गात् प्रजा इव शम्भोर्जटाजूटादाप इव विधातुर्मुखाच्छ्रुतय इव च, पुरान्मुरारिसेना निर्ययुरिति तात्पर्यम्। सेनानामानन्त्यं, पवित्रत्वं, शक्तिमत्त्वं चेति बहवो धर्मा व्यज्यन्ते। इयं च मालोपमा।

अनेन शास्त्रीयोपमा अपि बहवः उपयुक्ताः—

भारविरिवायं गम्भीरार्थप्रकटने परं निपुणः। हृद्यमिदं पद्यं गम्भीरार्थप्रकटने समर्थमिति सर्वेऽपि जानन्ति।

हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः।

शरीरभाजां भवदीयदर्शनं
व्यनक्तिकालत्रितयेऽपि योग्यताम् ॥ शिशु. १-२६

हे नारद! भवदीयदर्शनं सम्प्रत्यघं परिहरति। पूर्वाचरितैश्शुभैः कृतं भवति । एष्यतश्शुभस्य हेतुर्भवतीति च भूतभविष्यद्वर्तमानरूपे कालत्रितयेऽपि योग्यतां प्रकाशयतीति गम्भीरोऽर्थः प्रकाशितः ।

कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो
निधिश्श्रुतीनां धनसम्पदामिव ॥ शिशु. १-२८

यथा कश्चित्पिता पुत्राणां क्षेमं कर्तुकामः, कटाहादिदृढभाजने रजतमुद्राः हेममुद्राश्च निक्षिपति, निराकुलात्मा च भवति, तथा विधातापि प्रजानां क्षेमं कर्तुकामः योग्यपुरुषे त्वयि (नारदे) हितैषिणीश्श्रुतीर्निक्षिप्य स्वस्थचित्तो जात इति गम्भीरोर्थोऽत्र निक्षिप्तः ।

सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ शिशु. २-३६

सन्ति त्रयस्सुहृदस्त्रयश्शत्रवश्च । तेषु कृत्रिमस्सुहृत् कृत्रिमश्शत्रुश्च गरीयांसौ । कृत्रिमस्सुहृत् स्वीकरणीयः। कृत्रिमश्शत्रुः परिहरणीयः। सजप्राकृतौ सुहृदौ शत्रू च कार्यवशादमित्रौ मित्रे च स्याताम् । क्रियया निष्पन्नः कृत्रिमः । अपकारकरणेन कृत्रिमश्शत्रुस्सम्पद्यते । उपकारकरणेन कृत्रिमः सुहृत् सम्पद्यते । कृत्रिमौ मित्रामित्रौ प्रधानौ । सहजातस्सहजः । एकशरीरावयवत्वात् । तत्र सहजं मित्रं मातृष्वसेयपितृष्वस्रेयादि । सहजशत्रुस्तु पितृव्यतत्पुत्रादिः । प्रकृत्या सिद्धः प्राकृतः । पूर्वोक्तसहजकृत्रिमलक्षणरहित इत्यर्थः। तत्र विषयान्तरः प्राकृतश्शत्रुः। तदनन्तरः प्राकृतं मित्रम् । सहज प्राकृतौ शत्रुमित्रे च स्याताम् । तावात्मकार्यवशादनियमेनोभयरूपतामापद्येते इति कृत्रिम-

शत्रुमित्रे। कृत्रिमश्शत्रुश्शत्रुरेव मित्रं च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ गरीयांसौ, न तु सहजौ न तु प्राकृतौ। शिशुपालो रुक्मिणीहरणादिनाऽस्माकं कृत्रिमश्शत्रुः। अतोऽभियातव्य इति गुरुरर्थोऽत्र निक्षिप्तो माघेन।

दण्डीव ललितपदविनिवेशने कविरयमतीव निपुण इति सुनिपुणं विचारे स्फुटीभविष्यति।

निवर्त्य सोऽनुव्रजतः कृतानती–
नतीन्द्रियज्ञाननिधिर्नभस्सदः।
समासदत्सादितदैत्यसम्पदः
पदं महेन्द्रालयचारु चक्रिणः॥ शिशु· ११–१

श्लोकोऽयं, छेकानुप्रासवृत्त्यनुप्रासघटिततया मृदुमधुरवर्णतया च ललितपदैर्गुम्फितो दृश्यते।

म्रदीयसीमपि घनामनल्पगुणकल्पिताम्।
विस्तारयन्ति कुशलाश्चित्रां वाचं पटीमिव॥

शिशु. २–७४

लवङ्गमालकलितावतंसा
स्ते नारिकेलान्तरपः पिबन्तः
आस्वादितार्द्रक्रमुकास्समन्ता
दभ्यागतस्य प्रतिपत्तिमीयुः॥ शिशु. ३–८१

उभावपीमौ श्लोकौ ललितपदघटितौ दृश्येते। किं बहुना ! ललितपदविनिवेशनमस्य प्रायशस्सर्वेषु श्लोकेषु दृश्यत इव।

अतो माघे सन्ति त्रयो गुणा इति सूक्तिरक्षरशस्सत्येति मे प्रतिभाति ।

'माघे मेघे गतं' वयः इति वदता महामहोपाध्यायेन मल्लिनाथे महाकविर्माघः महोन्नतपदवीमारोपितस्सन् सर्वेषां विदुषां भूरिप्रशंसा-पात्रमभूदिति निश्चप्रचम् ।

